





# जलीयं विस्मयकरं जगत्

चिलिका – एशियाखण्डस्य अतिविशालः कश्चन सरोवरः – एषः समग्रं जगत् एव आकर्षति । सैबीरियन्‌जातीयाः पक्षिणः सहस्राधिकमैल्‌दूरम् अतिक्रम्य अत्र उपस्थिताः भवन्ति सन्तानोत्पत्त्यै । क्षणमात्रदृष्टिगोचरतां यान्तः डाल्फिन्‌मीनाः अत्र द्रष्टुं शक्याः । परितः स्थिताः द्वीपाः वीक्ष्यन्ताम् – प्रातः उपाहारः भवितुम् अर्हति द्वीपे । मध्याह्नभोजनं च कालीजयमन्दिरे । रात्रौ मधुचन्द्रयात्रा अपि द्वीपे एव यथा स्यात् तथा योजना क्रियताम् ।



mudra 1758




ORISSA

सुन्दरम् • शान्तम् • उत्कृष्टम्

For details contact: Ph: 0674 2432177, e-mail: ortour@orissatourism.gov.in
website: www.orissatourism.gov.in



# चन्दमामा

सम्पुटः-२२ मार्च्-२००६ सञ्चिका-३



## अन्तरङ्गम्


★ पुटोऽयं वाचकानाम् ...६
★ भारतीयाः सांस्कृतिकविशेषाः ...७
★ यथा दृष्टिः तथा सृष्टिः ...८
★ भयङ्करः खातः - ५ ...१३
★ भारतदर्शनम् ...२४
★ वार्ताविशेषः - ...२५
★ चन्दमामाप्रश्नावली - २ ...३१
★ वाचकानां कृते कथास्पर्धा - परिणामः ... ३२
★ सफलं देशाटनम् ...३४
★ नारायणपाण्डेयस्य वाक्शुद्धिः ... ४०
★ न्याय्याचरणम् ... ४५
★ अपात्रदानम् ... ५५
★ आर्यः - ३१ ...५९
★ पुटोऽयं भवताम् ...६४
★ चित्रशीर्षिकास्पर्धा ...६६




## एतस्य अङ्कस्य विशेषाः






रत्नमाला (वे.क.) ...१९
हिमाचलप्रदेशीया जानपदकथा ...२६







महपुरुषाणां जीवनघटना - ३ ...३८
रामायणम् - ३ ...४१



**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097.**

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १५०/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश (M.O.) द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email.: advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com

**Statement about Ownership of**

**CHANDAMAMA (Sanskrit)**

Rule 8 (FormVI), Newspaper (Central) Rules, 1956

1. **Place of Publication**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
2. **Periodicity of Publication**
   MONTHLY
   1st of each calendar month
3. **Printer's Name**
   B. VISWANATHA REDDI

   **Nationality**
   INDIAN

   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
4. **Publisher's Name**
   B. VISWANATHA REDDI

   **Nationality**
   INDIAN

   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
5. **Editor's Name**
   B. VISWANATHA REDDI (Viswam)

   **Nationality**
   INDIAN

   **Address**
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097
6. Name and Address of individuals who own the newspaper
   Chandamama India Ltd.
   Board of Directors:
   1. P. Sudhir Rao
   2. Vinod Sethi
   3. B. Viswanatha Reddi
   82 Defence Officers Colony
   Ekkatuthangal, Chennai-600 097

*I,* **B. Viswanatha Reddi,** *do hereby declare that the particulars given above are true to the best of my knowledge and belief.*

(Sd.) B. VISWANATHA REDDI
*Publisher*

1st March 2006



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# परीक्षाज्वरस्य औषधम्

मार्च्मासे प्रायः वार्षिकपरीक्षाः प्रचलन्ति भारते । अतः तेषु दिनेषु 'परीक्षाज्वर'बाधा दृश्यते सर्वत्र । एषा वार्षिकपरीक्षा छात्रस्य भविष्यस्य निर्णायिका । सा एव छात्रम् अग्रिमकक्ष्यां प्रति प्रेषयति, पुनरपि तस्याम् एव कक्ष्यायां पठने प्रवर्तयति वा । अतः छात्राः सहजतया एव परीक्षापरिणामविषये सातङ्काः भवन्ति ।

वार्षिकपरीक्षाभीतिं न्यूनीकर्तुम् एषु दिनेषु प्रायः सर्वे विद्यालयाः मासिकपरीक्षादिकम् आयोजयन्ति । तस्मात् बालाः पाठविषये सदा अवधानवन्तः भवन्ति, मुख्यपरीक्षायाः उत्तरणे आनुकूल्यं प्राप्नुवन्ति च ।

क्रीडाक्षेत्रे तिस्रः आज्ञाः भवन्ति – सावधानाः तिष्ठत, सज्जाः भवत, धावत इति । अध्ययनविषये अपि एषा एव नीतिः अनुसर्तुं शक्या । कक्ष्यासु नियता उपस्थितिः नितरां महत्त्वम् आवहति । सा एव जीवने अनुशासनबद्धताम् आनेतुम् अर्हति अपि । शिक्षकैः यत् बोध्यते तस्य सावधानं श्रवणम्, अवगमनं, टिप्पणीसज्जीकरणं च अग्रिमं सोपानम् । अध्ययनकाले आगताः सन्देहाः शिक्षकाणां साहाय्येन तत्तद्दिने एव निवारणीयाः । गृहम् आगत्य तत्तद्दिनस्य पाठाः पठनात् मनसि आकलनीयाः । यदि एवम् अध्ययनं निरन्तरं नियततया क्रियेत तर्हि परीक्षाकाले अधीतस्य पुनः स्मरणं, पाठ्यपुस्तकस्य सिंहावलोकनं च पर्याप्तं भवति । यद्यपि एतावता कथनेन कर्तव्याकर्तव्यं साकल्येन न उक्तं भवति, तथापि मुख्यः सारः तु सङ्गृहीतः एव । परीक्षाज्वरस्य निवारणाय अत्र उक्तम् एव उत्तमम् औषधम् । जीवने यदि अनुशासनयुक्तता भवति तर्हि अन्ये अंशाः सहजतया अनुसृताः भवेयुः एव ।

*सम्पादकः –* **विश्वम्**





# वाचकानां पुटोऽयम्

**माहिम्तः नियतिचिवालिया लिखति -**

गतेभ्यः आ त्रिभ्यः वर्षेभ्यः अहं मम पुत्रस्य निमित्तं **संस्कृतचन्दमामायाः** ग्राहकत्वं स्वीकृतवती अस्मि । दशमकक्ष्यायाम् उत्तीर्णस्य तस्य इदानीं महाविद्यालयीये पाठ्यक्रमे संस्कृतं न पाठ्यविषयः । अतः अहम् ३६ सञ्चिकाः अपि संस्कृतप्रशिक्षणमहाविद्यालयाय दत्तवती अस्मि, येन आसक्ताः विद्यार्थिनः ताः पठितुं शक्नुयुः । अहम् आङ्ग्लचन्दमामां नियततया पठामि, आनन्दम् अनुभवामि च ।

**नवदेहलीस्थः नीलमणिभाटिया (लेखकः चित्रकारः च) लिखति -**

**चन्दमामा** आधुनिकस्य कालस्य प्राचीनपरम्परायाः च सम्बन्धकल्पने वस्तुतः असिधारा-व्रतम् एव आचरति इत्यत्र न अतिशयोक्तिः । अस्माकं बालानां मनोविकासस्य सम्पादने **चन्दमामा** उत्तमं साधनम् । **चन्दमामा** स्वस्य उत्कृष्टं कार्यं निर्वहन्ती चिरम् अभिवर्धताम् इति आशासे ।

**दुर्गापुरात् ज्योतिरञ्जनविश्वालात् आगतं पत्रम् -**

भवतां सम्पादकीये (मे-२००५) वस्तुस्थितिः सम्यक् एव विवृता अस्ति । मातृभूमि-विषये अमितां श्रद्धां वहतां राष्ट्रनायकानां जीवनगाथायाः ज्ञापने शिक्षकैः समूहमाध्यमेन च अग्रेसरत्वं स्वीकरणीयम् इत्यत्र नास्ति संशयः । राष्ट्रनायकानां चिन्तनधाराविषये अद्यतन्याः युवजनतायाः श्रद्धा न्यूना एव दृश्यते । चन्दमामा पूर्वजानां विषये श्रद्धायाः राष्ट्रभक्तेः च उद्दीपने सुयोग्यम् एव पात्रं निर्वहन्ती दृश्यते ।

**केनडादेशीयः टोरेण्टोवासी अरविन्दविजयराघवः वदति -**

अहं चतुर्थे वर्गे पठामि । गताभ्याम् आ द्वाभ्यां वर्षाभ्याम् अहं **चन्दमामां** पठन् अस्मि । चन्दमामायाः कथनां कारणतः मया बहवः नैतिकाः अंशाः अवगताः सन्ति । भारतात् सहस्राधिकमैलदूरे वसन् अहं भारतीयसंस्कृतिसम्बद्धान् बहून् अंशान् अवगतवान् अस्मि चन्दमामातः । एतस्यां पत्रिकायां स्थिताः बालैः लिखिताः कथाः विनोदकणिकाः च मह्यं नितरां रोचन्ते ।

## भारतीयाः सांस्कृतिकविशेषाः

# होलिकापर्वकाले गजोत्सवः



मार्च्मासे होलिकापर्वणः पूर्वदिने राजस्थानीये जयपुरे **'गजोत्सवः'** आचर्यते । एतदवसरे बहवः गजाः अत्र आगच्छन्ति । रमणीयतया ते गजाः अलङ्क्रियन्ते । ते धावनस्पर्धायां भागं वहन्ति, पोलोक्रीडायां प्रवर्तन्ते अपि । चौगान्क्रीडाङ्गणे प्रवर्तते एतत्सर्वम् । बहवः सङ्गीतकाराः नृत्यपटवः चापि अत्र भागं वहन्ति । अत्रत्यस्य सर्वस्य अवलोकनात् कदाचित् भासते यत् स्वातन्त्र्यदिनाचरण-सम्बद्धायाः शोभायात्रायाः लघुरूपम् एव एतत् इति । अत्र या शोभायात्रा भवति तत्र न केवलम् अलङ्कृताः गजाः, अपि तु अश्वाः, रथाः, उष्ट्राः, शिबिकाः इत्यादयः अपि विशेषतः भवन्ति । तथापि गजगणः एव एतस्य उत्सवस्य मुख्यम् आकर्षणम् इति तु सत्यम् । उत्सवार्थं तेषां शुण्डाललाटादयः वर्णैः विभूष्यन्ते । तेषां पादाः अपि विविधैः विन्यासैः अलङ्क्रियन्ते । पुच्छे पादे च घण्टाकिङ्किण्यादयः बध्यन्ते अपि ।

उत्सवस्य आनन्दस्य पराकाष्ठा तदा द्रष्टुं शक्या, यदा च द्रष्टारः, विदेशेभ्यः आगताः अपि, एतस्यां यात्रायां भागवहनाय निमन्त्र्यन्ते । भागग्रहीतारः सर्वे वर्णान् विकिरन्तः वर्ण-जलं साधनविशेषेण धाराकारेण पातयन्तः च होलिकापर्व समाचरन्ति । आत्मनः स्थान-प्रतिष्ठादिकं विस्मृत्य सोत्साहं भागं वहन्ति ते । गजोत्सवोऽयं राजस्थानीयप्रवासोद्यमविभागेन आयोज्यते प्रतिवर्षम् ।

मार्च्मासे एव महाराष्ट्रे नृत्यसङ्गीतोत्सवः आचर्यते । तस्य नाम भवति **'एल्लोरोत्सवः'** इति । एल्लोराप्रदेशे स्थितानां गुहानां कारणतः एतत् नाम एतस्य उत्सवस्य । चामाद्रि-उपत्यकायां ३४ गुहाः सन्ति । ताः च गुहाः षष्ठात् क्रिस्तशतकात् अनन्तरं सहस्रात् क्रिस्तशतकात् पूर्वं (क्री.श. ६०० - १०००) निर्मिताः प्रायः । बौद्धजैनादिपरम्पराः एतासु दृश्यन्ते । कैलासमन्दिरयुक्ता गुहा तासु प्रमुखा । अखण्डशिलया निर्मितं मन्दिरम् एतत् । अतः एव जगति एव अद्वितीयत्वम् एतस्य । ७,००० कर्मकराः १५० वर्षाणां परिश्रमेण एतत् निर्मितवन्तः इति श्रूयते । गुहानां पृष्ठभूमिकायां विविधाः नृत्यपटवः सङ्गीतविद्वांसः च अत्र स्वीयां प्रतिभां प्रस्तुवन्ति । सहस्राधिकवर्षाणाम् इतिहासेन सांस्कृतिक-परम्परया च युक्तासु गुहासु सञ्चारः वस्तुतः रोमाञ्चं जनयति । उत्सवोऽयम् आयोज्यते महाराष्ट्रीयेण प्रवासोद्यमाभिवृद्धिसंस्थानेन ।



# यथा दृष्टिः तथा सृष्टिः

रङ्गनाथः कश्चन भूस्वामी । नगरे किञ्चित् वस्त्रवाणिज्यम् अपि आसीत् तस्य । रङ्गनाथः सेवकेषु परमदयालुः । 'अधिकवेतनदानेन सः सेवकान् पुत्रान् इव पश्यति' इति प्रथा आसीत् । अतः एव तस्य समीपे कार्यं कर्तुं युवानः उत्सुकाः भवन्ति स्म ।

रङ्गनाथस्य समीपे प्रमोदनामकः कश्चित् कार्यं करोति स्म । अग्रजस्य साहाय्यं कर्तुं प्रमोदः दूरदेशं गन्तुम् इष्टवान् । प्रमोदस्य कार्यं रङ्गनाथः बहुधा शंसति स्म । अतः तादृशमेव कार्ये नियोक्तुम् इच्छन् सः प्रमोदस्य बन्धुम् चन्द्रनामकं युवकं चितवान् ।

एतत् दृष्ट्वा रङ्गनाथस्य पत्नी उक्तवती - ''मम अनुजः शिवः एतत् कार्यं समर्थतया करोति । सः चन्द्रस्य अपेक्षया उत्तमं तरुणम् अन्विष्य एतस्मिन् कार्ये नियोजयितुम् अर्हति । भवान् निश्चिन्तः भवतु'' इति ।

भगिन्याः सूचनया आगतः शिवः रङ्गनाथसमीपम् आगत्य उक्तवान् - ''मम परिचितः हरिनामकः प्रमोदतः अपि उत्तमरीत्या कार्यं निर्वहति । तस्य कार्यशैली उत्तमा । सर्वप्रकारेण सः योग्यः अस्ति'' इति ।

तदा रङ्गनाथः - ''सहसा विदधीत न क्रियाम् इति उक्तिः स्मर्तव्या अस्माभिः । एतादृशे विषये विचिन्त्य प्रवर्तितव्यम् । सेवकस्य स्वीकरणात् पूर्वम् अनेकविधाः परीक्षाः करणीयाः । तासु परीक्षासु केचन उत्तीर्णाः भवन्ति, पुनः केचन अनुत्तीर्णाः । किन्तु प्रमोदः तासु सर्वासु परीक्षासु उत्तीर्णः । अत एव मयि तस्य विषये महती प्रीतिः अस्ति'' इति वदन् प्रमोदसम्बद्धां काञ्चन घटनां निरूपितवान् -

प्रमोदः नगरे स्थिते मम वस्त्रापणे कार्यं करोति । आढ्यतमत्वेन मम परिगणनं यत् अस्ति तस्य कारणम् अस्ति - प्रमोदस्य कार्यदक्षता एव । अहम् एतमपि विषयं जानामि यत् अन्ये वणिजः अधिकवेतनं दास्यामः इति प्रमोदं प्रलोभयितुं प्रवृत्ताः चेदपि प्रमोदः

वणिजां तं प्रस्तावं तिरस्कृतवान् इति । अस्मिन् विषये वस्तुस्थितिः कीदृशी इति ज्ञातुम् इच्छन् अहं विश्वासपात्रं बापटनामकं जनं कदाचित् तत्र नियोजितवान् ।



बापटः प्रमोदेन सह वार्तालापं कुर्वन् - ''रङ्गनाथः भवते प्रतिमासं सहस्रं रूप्यकाणि ददाति । किन्तु किं तेन ? अहं नगरे नूतनं वस्त्रापणम् उद्घाटयितुम् इच्छामि । यदि भवान् मम आपणम् आगच्छेत् तर्हि अहं भवते सहस्रद्वयं दास्यामि'' इति उक्तवान् ।

प्रमोदः अनङ्गीकारं प्रदर्शयन् - ''महोदय । मां केचन 'सहस्रत्रयं दास्यामः, आगच्छतु' इति वदन्तः मयि लोभं जनयितुं प्रयत्नं कृतवन्तः । किन्तु मया तत् न अङ्गीकृतम्'' इति उक्तवान् ।

बापटः प्रमोदविषये दयां प्रकटयन् उक्तवान् - ''जीवने यथाशक्ति दानादिकं धर्मकार्यं करणीयम् । अतः अहं भवते सहस्रचतुष्टयं वेतनं दास्यामि । आगच्छतु । रङ्गनाथस्य समीपे कार्यं कुर्वन् भवान् जीवने कदापि उन्नतं स्थानं प्राप्तुं न अर्हति एव । अतः मया उक्तस्य विषये गाम्भीर्येण चिन्तयतु'' इति ।

प्रमोदः एतं प्रस्तावं तिरस्कुर्वन् उक्तवान् -''महोदय ! दूरदृष्टियुक्तः जनः वेतनमेव प्रमुखं न भावयति, अपि तु स्वामी कीदृशः इति विचारयति । केचन रङ्गनाथस्य औन्नत्यम् असहमानाः तं वाणिज्ये नाशयितुं मयि एवं लोभं जनयन्तः सन्ति । यदा तेषां कार्यं साधितं भविष्यति तदा ते मामपि ततः निष्कासयिष्यन्ति एव । अपि च रङ्गनाथविषये मयि विश्वासः अस्ति यत् अयम् आपत्काले मम साहाय्यं करिष्यति एव इति । अतः अहं भवत्समीपम् आगन्तुं न सिद्धः'' इति ।

बापटः सर्वं विषयं मां निवेदितवान् । एतस्मात् अहम् अतीव सन्तुष्टः । परेद्यवि एव प्रमोदस्य अनुजायाः विवाहप्रस्तावः उपस्थितः । विवाहदिनं निश्चितम् अपि । मासत्रयम् अवशिष्टम् अस्ति विवाहाय । किन्तु वरपक्षीयाः वरदक्षिणारूपेण त्रिसहस्रं रूप्यकाणि अपेक्षितवन्तः । प्रमोदः तु प्रायः रिक्तहस्तः आसीत् । अतः सः सङ्कल्पितवान् यत् स्वामी प्रार्थनीयः इति ।

प्रमोदस्य धनप्रार्थनां श्रुत्वा अहं तं परीक्षितुम् इच्छन् कृत्रिमं दुःखं प्रदर्शयन् - ''मासपर्यन्तं कस्मैचिदपि ऋणं न दास्यामि इति निर्णयः स्वीकृतः अस्ति मया'' इति वदन् प्रमोदस्य हस्ते सहस्रं रूप्यकाणि ददत् उक्तवान्



- ''एतत् धनं मया मुख्यकार्यनिमित्तं रक्षितम्, एतत् मासद्वयपर्यन्तं भवतः समीपे भवतु । अस्मात् धनात् एकं रूप्यकमपि न स्वीकरणीयं भवता'' इति ।

प्रमोदः मौनेन तत् धनं स्वीकृत्य गृहं प्रति प्रस्थितः । मार्गे बापटः पुनः तं प्रलोभयन् उक्तवान् - ''मया श्रुतं यत् भवतः जीवने इदानीं धनस्य महती आवश्यकता अस्ति इति । रङ्गनाथः भवतः प्रार्थनां तिरस्कृतवान् इत्यपि मया ज्ञातम् । अतः भवान् मम समीपे कार्यं कर्तुं सन्नद्धः भवतु'' इति ।

प्रमोदः बापटं नखशिखान्तं दृष्ट्वा - ''मम स्वभावः सर्वदा अचलः, अपरिवर्तनशीलः च । एकदा यः निर्णयः मया श्रावितः तस्मिन्नेव अहं निष्ठावान् । मम स्वामी रङ्गनाथवर्यः समीचीनः एव'' इति उक्तवान् ।

प्रमोदस्य एतं विषयं सर्वं श्रुत्वा शिवः रङ्गनाथम् अवदत् - ''यदि प्रमोदः तावत् चतुरः स्यात् तर्हि बापटेन क्रियमाणं कार्यमपि सः जानीयात् एव । अहं चिन्तयामि यत् प्रमोदः भवत्तः समीचीनं प्रतिफलं प्राप्य भवतः दौर्बल्यम् अपि सम्यक् जानन् वञ्चयेत् इति'' इति ।

तदा रङ्गनाथः हसन् - ''इदानीं प्रमोदस्य विषयः मास्तु । प्रमोदस्य स्थाने नियुक्तिं यः अपेक्षते तस्य परीक्षा कथं क्रियते भवता ?'' इति पृष्टवान् ।

शिवः झटिति उक्तवान् - ''परीक्षायाः अपेक्षा एव नास्ति । मम पत्नी सर्वेषां गृहाणि असकृत् गच्छति । तेषु गृहेषु स्थितान् विचारान् सम्यक् जानाति सा । सर्वेषु गृहेषु गृहिण्याः आक्षेपः भवति यत् मम पतिः लघुविषये अपि क्रुद्धः भवति, अतः समञ्जनमेव कष्टाय इति । किन्तु हरेः पत्नी तु कदापि पतिं न निन्दति, प्रत्युत शंसत्येव ! एतदेव हरिविषयकं प्रमाण-पत्रम्'' इति ।

शिवस्य वचने रङ्गनाथस्य विश्वासः न उत्पन्नः । किन्तु रङ्गनाथस्य पत्नी अनुजस्य वचनम् अनुमोदयन्ती - ''तस्य वचने यदि विश्वासः नास्ति तर्हि भवान् स्वयमेव परीक्षां करोतु'' इति उक्तवती ।

अस्मिन् विषये किं करणीयम् इति प्रमोदमेव पृष्टवान् रङ्गनाथः । प्रमोदः दीर्घकालं विचिन्त्य उक्तवन् - ''अस्मिन् समये हरिः गृहे न स्यात् । आवां तत्र गच्छाव । चन्द्रविषये तस्य पत्याः अभिप्रायः कः इति जानीयाव'' इति ।

ततः तौ हरिगृहं गतौ । प्रमोदः हरेः पत्नीम्

उक्तवान् – ''अहं रङ्गनाथस्य वस्त्रापणे आ बहुभ्यः वर्षेभ्यः कार्यं कुर्वन् अस्मि । इदानीं मम अग्रजस्य साहाय्यं कर्तुं देशान्तरं गमिष्यता मया एषः उद्योगः त्यक्तव्यः । रङ्गनाथः अस्मिन् उद्योगे मम बन्धुं चन्द्रं नियोजयितुम् इच्छति । अतः चन्द्रविषये भवत्याः अभिप्रायः कः इति ज्ञातुम् आवाम् आगतौ'' इति ।

हरेः पत्नी गजलक्ष्मीः सङ्कोचं विना उक्तवती – ''चन्द्रस्य विषयं किं वा वदानि ? सः मदिरासक्तः, वञ्चकः, असत्यवादी च । एषु दिनेषु सः मम पत्या सह वार्तालापम् अपि त्यक्तवान्'' इति ।

''महान् सन्तोषः । भवत्या चन्द्रविषये उक्तः विचारः आवयोः लाभाय अभवत्'' इति उक्त्वा प्रमोदः रङ्गनाथेन सह ततः प्रस्थितः । मार्गे प्रमोदः रङ्गनाथम् उक्तवान् – ''गुञ्जा स्वस्य कृष्णं वर्णं न जानाति इति लोकोक्तिः अस्ति । मम भाति यत् गजलक्ष्म्याः पतिः हरिः एव वञ्चकः, पानासक्तः, असत्यवादी च इति'' इति ।

''हरिः एतादृशः इति भवता कथम् उच्यते ?'' इति पृष्टवान् रङ्गनाथः ।

''स्वामिन्, पूर्वं राजा पाण्डुः स्वपुत्रं धर्मराजं पृष्टवान् आसीत् – भवतः परिचितेषु उत्तमाः के, अधमाः के इति । तदा धर्मराजः – सर्वे अपि उत्तमाः एव, कोऽपि अधमः नास्ति इति प्रत्युत्तरं दत्तवान् आसीत् । यदा दुर्योधनः अस्मिन् विषये पृष्टः तदा सः – कोऽपि उत्तमः नास्ति, सर्वेऽपि नीचाः एव इति उक्तवान् आसीत् । एषा कथा भवता अपि श्रुता स्यात्'' इति उक्तवान् प्रमोदः ।

रङ्गनाथः झटिति प्रमोदस्य हस्तौ गृहीत्वा पृष्टवान् – ''भवतः विषये कश्चन सन्देहः मां बाधते । एतादृशः बुद्धिमान् भवान् स्वयमेव वाणिज्यं किमर्थं न कृतवान् ? मम समीपे किमर्थं कार्यं कृतं भवता ?'' इति ।

तदा प्रमोदः उक्तवान् – ''समग्रा भूमिः समाना एव । किन्तु फलवृक्षाः फलानि ददति । पुष्पवृक्षाः पुष्पाणि यच्छन्ति । तथैव कैश्चित् स्वबुद्धिमत्ता वाणिज्ये उपयुज्यते । पुनः कैश्चित् योग्यस्य स्वामिनः अन्वेषणे उपयुज्यते'' इति ।

रङ्गनाथेन प्रमोदः बहुधा प्रशंसितः । सप्ताहाभ्यन्तरे सः प्रमोदस्य स्थाने वस्त्रापणे चन्द्रस्यैव नियुक्तिं कृतवान् ।



# गरुडः अपराजेयः

**भवतां प्रियपत्रिकया चन्दमामया २००१-२००३ अभ्यन्तरे प्रकाशितायाः लोकप्रियायाः चित्रकथायाः शिष्टः भागः ....**

चन्द्रपुर्याः दिवङ्गतस्य मन्त्रिणः पुत्रेण आदित्येन प्राचीनेषु भवनेषु रहस्यमयशक्तियुता गरुडमूर्तिः, पिञ्छः च प्राप्यते । एतयोः उभयोः साहाय्येन आदित्यः विच्छिद्रकरीणां दुष्टशक्तीनां निग्रहे समर्थः भवति । सः युवराजः अस्ति इदानीम् । दुष्टाः शक्तयः पुनरपि सबलाः जाताः सन्ति इति ज्ञायते तेन ।

**अग्रिमेषु अङ्केषु राजकुमारस्य आदित्यस्य साहसकृत्यानि पठ्यन्ताम् । स्वीयायाः प्रतिकृतेः प्राप्तिः इदानीम् एव दृढीक्रियताम् । सदस्यतायाः नवीकरणं मा विस्मर्यताम् ।**

*लिख्यताम्* -

**चन्दमामा इण्डिया लिमिटेड्**
८२, डिफेन्स् आफीसर्स् कालोनी
इक्काटुथङ्गल्, चेन्नै - ६०० ०९७



# भयङ्करः खातः

## ५

*[विचित्रजन्तुरूपेण आगतस्य मान्त्रिकशिष्यस्य जयमल्लस्य मुखात् केशवः बहून् विचारान् ज्ञातवान् । ब्रह्मदण्डी मान्त्रिकः अवदत् यत् मया मन्त्रशक्तिबलात् भूकम्पः जनितः अस्ति इति । ततः सः जयमल्लम् आज्ञापयत् यत् केशवं नीत्वा गजसरोवरे स्नापयित्वा आनयतु इति । तदनन्तरम् ...]*

ब्रह्मदण्डिमान्त्रिकस्य आज्ञां श्रुत्वा जयमल्लः केशवस्य हस्तं गृहीत्वा ततः निर्गतवान् । गमनसमये केशवः चिन्तयन् आसीत् – 'एषः मान्त्रिकः मन्त्रशक्त्या महापर्वतम् एव कम्पयितुं शक्तवान् । एतत् तु महते आश्चर्याय एव । प्रत्यक्षदर्शनात् ऋते विश्वसितुम् अपि न शक्यते अत्र' इति ।

गच्छन् एव जयमल्लः केशवम् अवदत् – ''तस्य मन्त्रशक्तेः कारणतः एव भूकम्पः जातः इत्यत्र न विश्वसिमि अहम् । पर्वते विस्फोटकधातवः भवन्ति । तेषां कारणतः आकस्मिकतया कदाचित् पर्वतः कम्पते । तादृशः कम्पः यदा उत्पन्नः तदा तं तदा दृष्ट्वा मान्त्रिकः विकत्थनं कृतवान् स्यात् यत् मत्कारणतः एषः भूकम्पः सम्पन्नः इति । अतः भूकम्पस्य कारणं किम् इति स्पष्टतया वक्तुं न शक्यते'' इति ।

तावता तौ पर्वतस्थं कञ्चित् समतलं प्रदेशं



प्राप्तवन्तौ । तस्य पार्श्वे काचित् निर्झरी प्रवहति स्म । निर्झर्याः पार्श्वे स्थितायाः गुहातः कस्यचित् सिंहस्य गर्जनम् अपि श्रूयते स्म । सिंहः गर्जन् गुहातः बहिः आगतवान्, कस्याञ्चित् शिलायाः उपरि अतिष्ठत् च ।

''एषा एव गजनिर्झरी । अत्र जलं न प्रवहति इत्यतः गजसरोवरः इत्यपि एतस्य निर्देशः । चिह्नाङ्कितः सिंहः तत्र दृश्यते खलु । सः अत्रैव गुहायां निवसति । एषः सिंहः मान्त्रिकेण पालितः अस्ति'' इति विवृतवान् जयमल्लः ।

'सर्वम् एतत् आश्चर्याय एव ! पर्वतस्य कम्पनं, सिंहस्य पालनं, सिंहस्य शरीरे चित्रके इव चिह्नानि इत्यादयः अंशाः तु मया अश्रुतपूर्वाः एव । ब्रह्मदण्डी मान्त्रिकः एतस्य सिंहस्य आहाररूपेण मां प्रेषितवान् न स्यात् खलु ?'

इति चिन्तयन् केशवः जयमल्लस्य दिशि दृष्टिं प्रसारितवान् । जयमल्लः तु सिंहम् एव पश्यन् आसीत् । सिंहः पादम् उन्नीय पुनः पुनः गर्जति स्म ।

केशवः किञ्चित्कालं यावत् सिंहं निर्निमेषम् अपश्यत् । तस्य मनसि भावना आगता यत् यदाकदाचिदपि एषः सिंहः आक्रमणं कुर्यात् इति ।

अतः सः झटिति धनुषि बाणं संयोज्य बाणप्रयोगाय सज्जः जातः । जयमल्लः तु सिंहं दृष्ट्वा 'ओङ्कार, अये ओङ्कार' इति वदन् पुनः केशवं पश्यन् अवदत् - ''अये ! किम् एतत् क्रियमाणम् अस्ति भवता ? किं सिंहः बाणेन मारयितुं शक्यः इति भवता चिन्त्यते ? भवान् एतम् उद्दिश्य बाणं प्रयुज्य परिणामं जानातु तावत्'' इति ।

तावता केशवेन बाणः प्रयुक्तः आसीत् एव । स च बाणः सिंहस्य शिरःपर्यन्तं सशब्दं गतः, पुनः ततः निर्गत्य समीपस्थायां निर्झर्याम् अपतत् च ।

''पश्यतु, भवतः एकः बाणः व्यर्थः जातः । एषः ब्रह्मदण्डिमान्त्रिकेण पालितः सिंहः इति मया उक्तं खलु । अतः बाणाः एतं पीडयितुं न अर्हन्ति । मान्त्रिकः तु वदति यत् जगति अविद्यमानः एषः मया स्वयं सृष्टः इति । तस्य वचने न मम विश्वासः । सः मान्त्रिकः स्यात्, न तु स्वयं ब्रह्मा । शैशवे एव तेन एषः सिंहः गृहीतः स्यात् । ततः चित्रककुलोत्पन्नायाः सम्पर्कः कारितः स्यात्'' इति अवदत् जयमल्लः ।

''सर्वथा अज्ञानं भवतः । सम्पर्कमात्रेण

तस्याः शरीरे विद्यमानानि चिह्नानि एतस्य शरीरे भवितुं न अर्हन्ति'' इति अवदत् केशवः ।

''अथवा एषः तादृशयोः मेलनात् एव जातः स्यादपि । तदा तु मातुः लक्षणानि पुत्रे भवितुम् अपि अर्हन्ति एव । अन्या सम्भावना नाम दाहादिना सः एतस्य शरीरे एतादृशानि चिह्नानि सृष्टवान् स्यात् इति'' इति अवदत् जयमल्लः ।

''स्यान्नाम तथा । किन्तु तादृशस्य चिन्तनेन इदानीं किम् अस्माकम् ? एतस्य कारणतः आपतन्त्याः विपदः निवारणं कथम् इति तु आदौ चिन्तनीयं खलु ?'' इति अवदत् केशवः ।



''एतस्मात् न कोऽपि अपायः भविष्यति । अहं बहुकालतः मान्त्रिकस्य शिष्यः अस्मि । अतः जन्तूनां वशीकरणे मम विशिष्टा काचित् शक्तिः अस्ति एव । सः सिंहः इतःपरं मार्जारः इव तूष्णीं स्थास्यति, पश्यतु'' इति अवदत् जयमल्लः ।

अनन्तरक्षणे सिंहः केसरान् कम्पयन् विशालतया मुखं व्यादाय जृम्भणं कृत्वा मार्जारः इव तत्रैव मौनेन उपाविशत् । एतत् दृष्ट्वा केशवः नितराम् आश्चर्यचकितः । सः अचिन्तयत् – 'एषः स्वयं मन्त्रशक्तियुक्तः इव भासते । तथापि ब्रह्मदण्डिमान्त्रिकस्य शिष्यत्वम् एतेन किमर्थम् अङ्गीकृतम् इति तु न ज्ञायते । अत्र किमर्थं तिष्ठति इत्यपि न ज्ञायते । एषः अपि मान्त्रिकतः मोक्षम् इच्छेत् एव । किन्तु कापि असहायकता एतं बाधते इति मन्ये । अतः एषः इतः मोक्षं प्राप्तुं न शक्नोति । यदि एषः मम उत्तमं मित्रं स्यात् तर्हि एतस्य साहाय्येन अहम् इतः निर्गन्तुं निश्चयेन शक्नुयाम्' इति ।

जयमल्लः गजनिर्झर्यां मज्जनं कुर्वन् केशवम् अवदत् – ''अये ! कुतो विलम्बः ? स्नानं क्रियताम् । ब्रह्मदण्डी मान्त्रिकः तत्र आवां प्रतीक्षते'' इति ।

केशवः धनुर्बाणादिकं तीरे स्थापयित्वा स्नानं कर्तुम् उद्युक्तः जातः । स्नानानन्तरं मान्त्रिकः कालभैरवाय किं मां बलिरूपेण अर्पयेत् इति तस्य सन्देहः तु आसीत् एव ।

सः जयमल्लम् एतं विषयं प्रष्टुम् ऐच्छत् । किन्तु जयमल्लः तरन् तावता निर्झर्याम् अग्रे गतः आसीत् । अतः केशवः अपि तरन् तस्य समीपं गतवान् । यावत् सः स्वस्य मुखम् उद्घाटयितुम् उद्युक्तः तावता निर्झरीं प्रति

आगच्छतां गजानां घोरः घीङ्कारः अनतिदूरात् श्रुतः ।

"स्नानाय गजानां कोऽपि समूहः इतः एव आगच्छन् अस्ति इति भाति" इति अवदत् केशवः ।

"एतस्याः नाम एव अस्ति गजनिर्झरी इति । अतः अत्र गजानाम् आगमनं यदि स्यात् तर्हि तत्र किम् आश्चर्यम् ?" इति हसन् अवदत् जयमल्लः ।

"आश्चर्यस्य नायं विषयः । इतः त्वरया निर्गच्छाव तावत् । अन्यथा ते गजाः आवां पादैः विमर्दयेयुः अपि" इति भीत्या अवदत् केशवः ।

केशवस्य भीतिं दृष्ट्वा जयमल्लः हसितवान् । गजाः तु घीङ्कुर्वन्तः शुण्डया शाखाः निवारयन्तः च निर्झरीतीरम् आगताः एव । तान् दृष्ट्वा जयमल्लः पुनरपि सकृत् मज्जनं कृत्वा उत्थाय कमपि मन्त्रं जपितवान्, गजान् उद्दिश्य जलं क्षिप्तवान् च । अनन्तरक्षणे गजानाम् आगमनं स्थगितम् । तेषां घीङ्कारः अपि स्थगितः ।

"दृष्टा खलु मम शक्तिः" इति अवदत् जयमल्लः । ततः सः तरन् केशवसमीपम् आगच्छत् । केशवस्य तु महत् आश्चर्यम् । जयमल्लस्य एतादृशं सामर्थ्यं स्यात् इति न चिन्तितम् आसीत् तेन ।

केशवस्य आशयम् अवगतवान् इव जयमल्लः अवदत् - "पशुपक्षिणां वशीकरणाय महत्याः मन्त्रशक्तेः आवश्यकता कापि न भवति । एतादृशानि कार्याणि ब्रह्मदण्डी



मान्त्रिकः लीलया करोति । मन्त्रशक्तेः सामर्थ्यम् अपूर्वं भवति । मन्त्रशक्तिबलात् समग्रं जगत् एव वशीकर्तुम् अपि शक्यम् । भूतभविष्यतोः ज्ञानम् अपि ततः शक्यते । गुप्तनिधेः ज्ञानम् अपि ततः शक्यते । भयङ्कर-खातस्थः निधिः यस्मिन् दिने अस्माकं हस्त-गतः भवेत् तस्मिन् एव दिने अस्माकं मन्त्रवेत्तृता प्रमाणिता भवेत्'' इति ।

''सः भयङ्करखातः कुत्र अस्ति ?'' इति अपृच्छत् केशवः ।

''तत् यदि ज्ञायेत तर्हि अहं किमर्थम् अत्र तिष्ठेयम् ? तस्य ज्ञानाय एव मया एतस्य मान्त्रिकस्य आश्रयः प्राप्तः अस्ति'' इति अवदत् जयमल्लः ।



जयमल्लः मान्त्रिकसमीपे यत् तिष्ठति तस्य मूलकारणं तु अवगतं केशवेन। भयङ्कर-खातस्थस्य निधेः प्राप्त्यर्थम् एव मान्त्रिकेण मम उपयोगः प्राप्येत इति अचिन्तयत् सः ।

जयमल्लः तीरम् आगत्य वस्त्रेण शरीरं मार्जयन् उच्चस्वरेण अवदत् - 'अये केशव ! शीघ्रम् आगम्यताम्' इति । केशवः अपि तीरम् आगत्य शरीरं मार्जयित्वा धनुर्बाणादिकं स्वीकृत्य जयमल्लेन सह ततः प्रस्थितवान् ।

जयमल्लः क्षणं यावत् स्थित्वा - ''एतेषां गजानां स्तम्भनम् इतःपरं तु न आवश्यकम्'' इति उक्त्वा उच्चस्वरेण - ''अयि भोः गजाः ! इदानीं भवन्तः निर्झर्यां स्नातुम् अर्हन्ति'' इति अवदत् ।

गजाः बन्धनात् मुक्ताः इव स्नानाय निर्झरीं प्रति वेगेन अगच्छन् । जयमल्लः एकं लघुं शिलाखण्डं स्वीकृत्य सिंहं लक्ष्यीकृत्य क्षिप्त्वा अवदत् - ''इतःपरं भवान् गर्जनम् आरब्धुम् अर्हति'' इति । अनन्तरक्षणे एव सिंहः उच्चैः गर्जनम् अकरोत् । तत् गर्जनं श्रुत्वा स्नानरताः गजाः अपि उच्चैः घीङ्कृतवन्तः ।

''मित्र ! यदा यदा अहम् अत्र स्नानार्थम् आगच्छामि तदा एवमेव प्रवर्तते । गजाः च घण्टां यावत् घीङ्कुर्वन्ति, सिंहोऽपि घण्टां यावत् गर्जति । अन्ते गजाः अरण्यं गच्छन्ति, सिंहः च गुहां प्रविशति'' इति अवदत् जयमल्लः सन्तोषेण ।

जयमल्लस्य एतं व्यवहारं दृष्ट्वा केशवः किञ्चिदिव खिन्नः जातः । सः अचिन्तयत् - 'मान्त्रिककारणतः अचिरात् एव विपत्तिः सम्भविष्यति इति अहं चिन्ताक्रान्तः । किन्तु एषः तु तद्विषये अवधानवान् न सर्वथा । महाकार्यं साधितवान् इव एषः सन्तोषम्

अनुभवन् दृश्यते ! एवं व्यवहरन् अयं वदति – अहं भवतः हिताकाङ्क्षी अस्मि, भवतः कोऽपि अपायः यथा न भवेत् तथा अहं करिष्यामि इति ।'

अतः सः जयमल्लम् अवदत् – "जयमल्ल ! इतःपरम् आवां सुहृदौ इति भवता उक्तम् आसीत् । किन्तु इदानीं भासते यत् आपतन्त्याः विपदः विषये भवान् चिन्तयन् नास्ति इति । किम् एतत् उचितम् ?" इति ।

जयमल्लः उत्तरकथनात् पूर्वं पर्वतशिखरम् अपश्यत् । तत्र तौ एव पश्यन् स्थितः ब्रह्मदण्डी राक्षसः तेन दृष्टः । जयमल्लः मन्दस्वरेण केशवम् अवदत् – "भवान् उच्चैः सम्भाषणं कुर्वन् अस्ति । मान्त्रिकस्य श्रवणशक्तिः तीक्ष्णा । अतः आवाभ्यां मन्दस्वरेण एव सम्भाषणीयम् । अहं भवतः रक्षणम् अवश्यं करिष्यामि । भयङ्करखातं प्रति गन्तुं कः अर्हः इति अद्य अहमपि ज्ञातवान् अस्मि । भवतः स्कन्धे स्थितं सर्पचिह्नं दृष्ट्वा सः नितरां सन्तुष्टः इत्येतत् भवता अपि लक्षितं स्यादेव । भयङ्करखातप्रवेशस्य सर्पचिह्नस्य च गभीरः सम्बन्धः इति तु सुस्पष्टम् । किन्तु तस्य पूर्णं स्वरूपं तु सः एव जानाति । अद्य रात्रौ सः कामपि शक्तिं भवति आवाह्य भवन्मुखात् निधिप्राप्तिक्रमं, खातं प्रति गमनमार्गं च वाचयेत् । तत् अस्माभिः अपि ज्ञातव्यम् । तदनन्तरं वयं तं परलोकं प्रति प्रेषयाम" इति ।

"किन्तु ततःपूर्वम् एव सः आवां परलोकं प्रति यदि प्रेषयेत् तर्हि .... ?" इति सन्देहेन अपृच्छत् केशवः ।

"तथा न करिष्यति सः । इदानीं सः धनपिशाचेन कीर्तिकामनया च ग्रस्तः अस्ति । अतः तस्य बुद्धिः कुण्ठिता जाता अस्ति सर्वथा । अतः एव आवाभ्यां सहस्रधाराय अवसरः प्राप्तः अस्ति" इति अवदत् जयमल्लः ।

पर्वतशिखरस्थः मान्त्रिकः तयोः आगमनं पश्यन् आसीत् । सः मन्दहासपूर्वकम् उच्चस्वरेण अवदत् – "जयमल्ल ! आगमनसमये बिल्वसमिधः अपि आनयतु । कालभैरवः महत्याः बुभुक्षायाः कारणतः व्यग्रः अस्ति । सहस्रे वर्षेषु एकवारं तेन एवं बुभुक्षा प्राप्यते" इति ।

– *(अनुवर्तते)*



## वेताल-कथा

# रत्नमाला

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवान् कस्यचित् मान्त्रिकस्य अपमाननं कृतवान् स्यात्, तस्मात् कुपितः सः शापं दत्तवान् स्यात् इति भावयामि अहम् । संन्यासिनः मन्त्रतन्त्रादिशक्तेः उपयोगेन किमपि कर्तुम् अर्हन्ति । तेषाम् एतत् बलम् अजानन् गौरवः नाम कश्चित् शापं प्राप्य जीवने बहूनि कष्टानि अनुभूतवान् । सः कः, तेन किमर्थं कीदृशं कष्टम् अनुभूतम् इत्यादिकं ज्ञातुं भवतः महत् कुतूहलं स्यात् एव । भवतः कुतूहलस्य शमनाय अहं तदीयां कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।



अनन्तरं वेतालेन कथा आरब्धा –

श्रीनिवासः श्रीपुरस्य वणिक्षु अन्यतमः । तस्य पत्नी सुजाता विनयवती, सुशीला, गुणवती च । तयोः उभौ पुत्रौ । ज्येष्ठः भैरवः । अपरः गौरवः । भैरवः स्वभावेन शान्तः विनयशीलः च । किन्तु गौरवः न तथा । सः रूक्षः अशिष्टः च ।

कदाचित् कश्चन संन्यासी तेषां गृहम् आगतवान् । सुजाता तम् आदरेण स्वागतीकृत्य भोजनं पर्यवेषयत् । भैरवः तं विनयेन नमस्कृतवान् । किन्तु गौरवः तस्य पुरतः एव अवदत् – ''एतादृशस्य भिक्षुकस्य सम्मानः किमर्थम् ?'' इति ।

एतत् श्रुत्वा संन्यासी कुपितः । तथापि सः शान्ततया अवदत् – ''अन्नस्य याचितरि एतादृशः कोपः अनुचितः । भवता अपि भाविनि काले कदाचित् भिक्षा याचनीया भवेत्'' इति ।

''मम गृहस्य अन्नं खादित्वा किं माम् एव भाययति भवान् ? भवादृशात् न कापि भीतिः मम । भवान् आदरसत्कारयोः पात्रं सर्वथा न'' इति उक्त्वा गौरवः ततः निर्गतवान् ।

श्रीनिवासः, सुजाता, भैरवः च संन्यासिनः कोपात् भीताः । ते संन्यासिनं प्रार्थितवन्तः यत् कोपेन शापः न दातव्यः इति । तदा संन्यासी हसन् अवदत् – ''तं विषयं त्यजन्तु नाम, भवन्तः यत् इच्छन्ति तत् याचन्तु'' इति ।

''अस्माकम् अन्या इच्छा कापि नास्ति । गौरवस्य दुष्टता अपगच्छतु इति एका एव अपेक्षा अस्माकम्'' इति उक्तवती सुजाता ।

तदा संन्यासी अवदत् – ''आश्चर्यस्य विषयः नाम दुष्टतापिण्डं गौरवः भवतां गृहे कथं जातः इति । सः स्वीयं मार्गम् अनुसरतु नाम । तद्विषये चिन्ता मा क्रियताम्'' इति ।

''तस्य भविष्यम् उज्ज्वलं भवतु इति एका एव इच्छा अस्माकम्'' इति अवदन् गृहजनाः ।

''तस्य बुद्धेः वक्रतां परिमार्जयितुं मम शक्तिः नास्ति'' इति वदन् संन्यासी क्षणकालानन्तरं प्रकाशमानां रत्नमालां काञ्चित् श्रीनिवासाय दत्त्वा अवदत् – ''एषा माला महिमान्विता । एतां पूजामन्दिरे स्थापयित्वा प्रतिदिनं पूजां कुर्वन्तु भवन्तः । तस्मात् भवतां हितं सेत्स्यति । किन्तु एतां यदि अयोग्यः धरेत्, यदि वा एषा अन्यस्मै दीयेत तर्हि एतस्याः महिमा विनष्टः भविष्यति'' इति ।

गौरवस्य जीवनं परिष्कृतं भवेत् इति आशया तां मालां स्वीकृत्य पूजामन्दिरे

स्थापितवान् श्रीनिवासः । संन्यासी गृहसदस्यान् आशिषा अनुगृह्य ततः निर्गतवान् ।

कानिचन वर्षाणि अतीतानि । कदाचित् श्रीनिवासः पुत्रौ आहूय अवदत् – ''अहं वृद्धः जातः अस्मि । अतः भैरवः मम वाणिज्य-व्यवहारं निर्वहतु । गौरवश्च तस्य साहाय्यं करोतु'' इति ।

पितुः एषः निर्णयः गौरवेण न अङ्गीकृतः । सः पितरम् अवदत् यत् एषः व्यवहारः अन्याय्यः पक्षपातोपेतः च इति । ''मह्यं किञ्चित् धनं दीयताम् । अहं तत् धनं स्वीकृत्य निर्गमिष्यामि, वाणिज्यं च करिष्यामि'' इति सः अवदत् । अनन्यगतिकः श्रीनिवासः गौरवाय धनं दत्तवान् । गौरवः तत् स्वीकृत्य गृहात् निर्गतवान् । सः बहुविधानि वाणिज्यानि कृतवान् । कस्माच्चिदपि तेन लाभः न प्राप्तः । महतीं हानिं प्राप्य सः निर्धनः जातः ।

गौरवः गृहं प्रत्यागतवान्, पितरम् अवदत् च – ''वाणिज्ये महती हानिः प्राप्ता मया । इदानीम् अहम् अकिञ्चनः जातः अस्मि । मम अग्रजः वाणिज्ये प्रगतिं साधितवान् यत् तत्र न तस्य श्रेष्ठता कारणम् । एवमेव मया महती हानिः अनुभूता यत् तत्र मम असामर्थ्यम् एव वा न कारणम् । पूजामन्दिरे या रत्नमाला अस्ति सा एतत्सर्वं कारयति । अतः सा माला मह्यं दीयताम् । अहम् उत्तमां स्थितिं प्राप्य प्रत्यागमिष्यामि'' इति ।

''रत्नमाला पूजामन्दिरतः अपनीता चेत् महत् कष्टं सम्मुखीकरणीयं भवेत् । मालायाः विषये पालनीयाः नियमाः भवता अविदिताः न । तथापि तां मालां प्राप्तुम् इच्छति भवान् ।



भवतः विवेकः सर्वथा नष्टः अस्ति'' इति अवदत् श्रीनिवासः ।

पितुः कथनं श्रुत्वा गौरवः नितरां कुपितः । तस्यां रात्रौ सर्वे यदा निद्रायाम् आसन् तदा सः उत्थाय किञ्चित् धनं रत्नमालां च स्वीकृत्य गृहात् निर्गतवान् । अनन्तरदिने तेन कश्चन महाग्रामः प्राप्तः । स च ग्रामः समीपस्थानां बहूनां ग्रामाणां केन्द्रम् आसीत् ।

एतस्मिन् ग्रामे वस्त्रवाणिज्यम् आरब्धं चेत् महान् लाभः प्राप्येत इति चिन्तितं गौरवेण । अतः सः वासाय एकं गृहं भाटकरूपेण प्राप्त-वान् । समीपस्थं नगरं गत्वा बहूनि वस्त्राणि क्रीत्वा शकटे आरोप्य तं ग्रामं प्रति प्रस्थितवान् सः । मध्येमार्गं महती वृष्टिः आरब्धा । अतः प्रयाणं मन्दगत्या प्राचलत् । अत्रान्तरे केचन लुण्ठाकाः आगत्य छुरिकां दर्शयन्तः भायित-



वन्तः । शकटस्थानि सर्वाणि वस्त्राणि ते स्वायत्तीकृतवन्तः । स्वस्य दौर्भाग्यं निन्दन् गौरवः यावत् गृहं प्राप्तवान् तावता अशनि-पातात् तत् गृहं दग्धं जातम् ।

एतस्य सर्वस्य कारणम् एषा रत्नमाला एव इति गौरवः अचिन्तयत् । इतः मोक्षं प्राप्तुं सः यावत् उपायं चिन्तयन् आसीत् तावता सः एव मालादाता संन्यासी तत्र उपस्थितः । सः गौरवम् अवदत् – ''अये पापिन् ! भवान् स्वीयानां दुर्व्यवहाराणां फलम् इदानीम् अनुभवन् अस्ति । इतःपरम् एतस्मिन् एव ग्रामे भिक्षा याचनीया भविष्यति भवता । या कन्या हृत्पूर्वकं भवतः विवाहम् इच्छेत् तस्यै एषा माला दत्ता चेत् भवान् दुर्गतितः विमुक्तः भवेत्'' इति ।

तस्मात् दिनात् गौरवः तस्मिन् ग्रामे भिक्षा-याचनम् आरब्धवान् । या कन्या दृश्यते तां सः स्वीयां दुरवस्थां निवेद्य वदति स्म यत् भवत्या मम परिणयः अङ्गीकृतः चेत् एषा रत्नमाला प्राप्यते इति । द्वित्राः कन्यकाः तस्य परिणयम् अङ्गीकृतवत्यः । ताभ्यः सः रत्न-मालां दत्तवान् अपि । तथापि अल्पे एव काले सा माला तस्य हस्तं प्रति एव आगता ।

सर्वत्र अटन् गौरवः कदाचित् मार्कण्डेय-पुरम् आगतवान् । तत्र देवः नाम कश्चित् आसीत् । बाल्ये एव सः मातापितृवियोगं प्राप्तवान् आसीत् । परिश्रमेण कार्यं कुर्वन् सः भगिनीं शिवानीं पोषयति स्म । भ्राता भगिनी च महता प्रेम्णा जीवतः स्म ।

तस्मिन् एव ग्रामे निवसन्त्यां देवक्यां देवः अनुरागवान् आसीत् । देवकी पञ्चषेषु गृहेषु कार्यं करोति स्म । तस्याः बन्धुः कोऽपि न आसीत् । सा इच्छति स्म यत् कोऽपि धनिकः मया परिणेतव्यः, सुखमयं जीवनं यापनीयं च इति । तस्याः एताम् इच्छां जानन् देवः तस्याः पुरतः स्वस्य इच्छां न प्रकटितवान् एव । शिवानी अग्रजस्य इच्छां जानाति स्म । अतः सा कदाचित् देवकीं दृष्ट्वा अवदत् – ''मम अग्रजः भवत्याम् अनुरागवान् अस्ति । सः धनिकः न स्यात्, किन्तु गुणवान् तु अस्ति एव'' इति ।

''किं गुणराशिना ? भवती मह्यम् एकां रत्नमालाम् आनीय ददातु । तदा अहं भवत्याः अग्रजेन परिणीता भविष्यामि'' इति अवदत् देवकी ।

''रत्नमालां प्राप्तुम् अहं यत्किमपि कर्तुं सिद्धा । किन्तु धनेन विना रत्नमाला न प्राप्येत खलु ?'' इति विषादेन अवदत् शिवानी ।

तावता भिक्षायाचनाय गौरवः तत्र आगतवान् । सः देवकीशिवान्योः सम्भाषणं श्रुतवान् आसीत् । सः शिवानीम् अपृच्छत् – ''विना धनम् अहं भवत्यै यदि रत्नमालां दद्यां तर्हि किं भवती मां परिणयेत् ?'' इति ।

रत्नमालायाः दर्शनमात्रेण शिवान्याः नेत्रे आनन्दपूर्णे जाते । सा विना विशेषचिन्तनं, स्वस्य अङ्गीकारम् असूचयत् । गौरवः रत्नमालां शिवान्यै दत्तवान् । शिवानी तां देवक्याः कण्ठे अर्पितवती ।

गौरवः महता आनन्देन अवदत् – ''अद्य अहं संन्यासिनः शापात् मुक्तः । मम परिणयं हृत्पूर्वकम् इच्छन्ती लब्धा अस्ति मया'' इति ।

भवानीम् अन्विष्यन् देवः तावता तत्र आगतः । प्रवृत्तं सर्वं ज्ञातं तेन । गौरवः उत्तमकुले जातः एव इत्यपि तेन ज्ञातम् । ततः अनन्तरदिने एव देवदेवक्योः गौरवशिवान्योः च विवाहः सम्पन्नः ।

वेतालः एवं कथां समाप्य अपृच्छत् – ''राजन् ! संन्यासी उक्तवान् आसीत् यत् रत्नमालायाः पूजातः गृहजनानां हितं भविष्यति इति । तथापि गौरवः किमर्थं शापग्रस्तः सन् भिक्षायाचनस्थितिं प्राप्तवान् ? रत्नमालया श्रीनिवासकुटुम्बस्य किं वा साहाय्यं कृतम् ? गौरवः अपि ततः लाभं कमपि न प्राप्तवान् । विशेषलाभः तु देवेन प्राप्तः । एवं ननु ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् – ''संन्यासिना यः शापः दत्तः ततः रत्नमालाहेतुना गौरवः लाभान्वितः एव जातः, अन्ये अपि लाभं प्राप्तवन्तः । गौरवेण कष्टानि अनुभूतानि स्युः, तथापि अन्ते तेन सज्जनता प्राप्ता एव । श्रीनिवासादीनाम् इच्छा ततः पूर्णा जाता । गौरवेण गुणवती शिवानी पत्नीत्वेन प्राप्ता । एषः महान् लाभः एव खलु ? देवः अनुरागपात्रभूतां पत्नीं प्राप्तवान् यत् तत्रापि रत्नमालायाः प्रभावः एव कारणम् । एतस्मात् स्पष्टं यत् शापः लाभाय एव जातः इति'' इति ।

एवं राज्ञः मौनभङ्गं साधयितुं शक्तः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षशाखाम् अवलम्बितवान् ।





# भारतदर्शनम्

## पादुकायात्रा

महाराष्ट्रे प्रतिवर्षं जून्-जूलैमासयोः 'शिबिकायात्रा' प्रचलति । यात्रारम्भतः आरभ्य समाप्तिं यावत् एतस्यां यात्रायां पञ्चलक्षाधिकाः (क्वचित् दशलक्षाधिकाः अपि ) भक्ताः भागं वहन्ति । स्थानद्वयात् निर्गताः एते पुणेनगरे सम्मिलिताः भवन्ति । ४०० वर्षेभ्यः पूर्वं जन्म प्राप्तवतोः तुकारामध्यानेश्वरयोः पादुके शिबिकाद्वयेन नीयेते । २८ दिनानि एषा यात्रा प्रचलति । पुणे-पण्डरापुरयोः मध्ये स्थितं २०० कि.मी.-अन्तरं ते यात्राकर्तारः नग्नपादाः सन्तः एव अतिक्रामन्ति । यात्रायाः अनुशासनोपेतता, भक्तानां दृढा भक्तिः च प्रत्यक्षदर्शनात् एव अवगता भवेत् ।

गते जून्मासे ३० तमे दिनाङ्के ६०,००० भक्ताः देहुतः आळन्दीतः च प्रस्थाय पुणेनगरं प्राप्तवन्तः । देहुतः तुकारामस्य पादुके आनीते आस्ताम् । एवमेव आळन्दीतः ध्यानेश्वरस्य पादुके अपि आनीते आस्ताम् । अनन्तरदिने ते भजनं कुर्वन्तः गायन्तः च पण्डरापुरं प्रति प्रस्थितवन्तः । विठ्ठलः इति भगवतः विष्णोः नामान्तरम् । तेन नाम्ना ख्यातः भगवान् विष्णुः अत्र भक्त्या पूज्यते जनैः । पण्डरापुरं प्रति प्रस्थितैः भक्तैः जुलैमासस्य २९ तमे दिनाङ्के तत्र प्राप्तम् । एतस्मात् सुदीर्घात् अपि प्रयाणात् भक्ताः तु किञ्चिदपि न श्रान्ताः । महत्त्वपूर्णे उत्सवे भागः गृहीतः इत्यतः नितरां सन्तुष्टाः एव आसन् ते ।

# वार्ताविशेषः

## भारतीयत्वम् आपन्नः 'स्पैडर्मेन्'



स्पैडर्मेन्चित्रकथाः प्रायः बालानां प्रियाः । तासां कथानां नायकः इदानीं वेष्टीधारी सन् भारतीयासु पत्रिकासु दृष्टिगोचरतां याति । भारतीयासु एतासु चित्रकथासु तस्य नाम अस्ति पवित्रप्रभाकरः । प्रथमायां कथायां सः मुम्बयीनगरीयान् दुष्टजनान् निगृह्णाति । दुष्टशक्तेः निग्रहाय जालनिर्माणोपायं तं बोधयति कश्चन योगी । विदेशीयासु कथासु यः पीटर् पार्कर् आसीत् सः भारतीयासु कथासु पवित्रप्रभाकरः जातः अस्ति । मेरी जाने मीराजैन् इति नाम प्राप्तवती अस्ति । सा च प्रभाकरस्य सखी । अङ्कल् बेन् मातुलः भीमः जातः दृश्यते अत्र । स्पैडर्मेन्कथायाः भारतीयावृत्तेः रचयिता अस्ति जीवः के. काङ्ग् इत्येषः ।

## युतकेषु तिरुक्कुरळ्वाक्यानि

तमिळुनाडुराज्ये कोयम्बत्तूरुसमीपे अस्ति तिरुपुरं, यत्र च वस्त्रनिर्माणोद्यमः महता प्रमाणेन प्रचलति । अन्तर्युतकानि, अन्तर्वस्त्राणि, पादस्यूतः, हस्तकोषाः, संसक्तयुतकानि (टिशर्ट्स्) इत्यादीनि तत्र निर्मीयन्ते । प्रायः तानि सर्वाणि विदेशान् प्रति गच्छन्ति । तत्रत्यासु काचित् संस्था तिरुक्कुरळ्वाक्यानि युतकेषु सम्मुद्रय इटलीदेशं प्रति अप्रेषयत् । युतकस्थानि वाक्यानि द्विसहस्राधिकवर्षेभ्यः पूर्वं स्थितैः पूर्वजैः उक्तानि इति ज्ञात्वा इटलीजनाः तेषु कुतूहलिनः जाताः । 'टीम्-स्पिरिट्' इति नाम्ना तया निर्मातृसंस्थया तानि युतकानि प्रेषितानि आसन् । आंग्लानुवादसहितानि भवन्तु एतानि वाक्यानि इति वदन्तः इटलीयाः क्रेतारः महता प्रमाणेन क्रयणादेशं प्रेषितवन्तः । निर्मातृसंस्थया भारतीयर्भारतीयदासन्प्रभृतीनाम् उक्तीः एतावता एव सज्जीकृताः सन्ति । सांस्कृतिकदेशभक्तनायकानां वचनानां योगवाक्यानां च मुद्रणाय योजना प्रचलति । भारतीयत्वं जनप्रियं जायमानम् अस्ति विदेशेषु अपि !!



# कदा वा आगच्छेत् ग्रीष्मः ?

चन्द्रसरोवरः अस्ति कुञ्जुम्लाखाते स्पिटी-नद्याः लहुलप्रदेशस्य च मध्ये । शीत-काले स च सरोवरः हिममयः भवति । किन्तु ग्रीष्मकाले सरोवरपार्श्वस्थः पर्वतप्रदेशः हरिततृणमयः भवति । पर्वतस्य अद्वितीयां शोभां प्रतिबिम्बयति चन्द्रसरोवरः । अतः तस्मिन् काले तस्य दर्शनं नेत्रानन्दकरम् । समीपग्रामवासिनः मेषपालाः तस्मिन् काले तं पर्वतप्रदेशं प्रति स्वीयान् मेषान् आनयन्ति । तत्रत्यानि कोमलानि तृणानि खादितवन्तः मेषादयः अन्यत्र गमने न उत्सहन्ते । अतः मेष-पालाः प्रायः शीतकालप्राप्तिपर्यन्तं तत्रैव निवसन्ति ।



चन्द्रसरोवरात् अनतिदूरे अस्ति हान्से-ग्रामः । तस्मिन् निवसति स्म निमः नाम कश्चन तरुणः । सः भ्रात्रा भ्रातृजायया च सह निवसति । भ्रातृजायायाः नाम दोलमा इति । सा रूक्षस्वभावा । गृहे निमस्य सुखेन स्थितिं न सहते सा । अतः निरन्तरं किमपि कार्यम् आदिशन्ती भवति सा । काष्ठच्छेदनं, सस्यानां सेचनम् इत्यादीनि बहूनि कार्याणि करणीयानि भवन्ति तेन । दोलमायाः जिह्वा तीक्ष्णा । श्रान्तिभावं प्रदर्शयन्तं तं सा वदति – ''कांचित् कन्यां परिणयतु भवान्, येन मम भवतः च साहाय्यं भवेत् । भवता च प्रभूता विश्रान्तिः प्राप्येत'' इति ।

निमः सदापि ग्रीष्मकालं प्रतीक्षते । यतः तस्मिन् काले तेन चारणाय मेषाः चन्द्रसरोवर-परिसरं प्रति नीयन्ते । तत्रत्यः रमणीयः परिसरः तदीयान् सर्वान् खेदान् अपनयति । एतदवसरे अपि सः भ्रातृजायया दत्तान् आहारपदार्थान्

स्वीकृत्य मेषैः सह चन्द्रसरोवरं प्रति प्रस्थितवान् । यदा पर्वतीयः तृणमयः प्रदेशः प्राप्तः तदा मेषाः महता आनन्देन तृणानां चरणे मग्नाः जाताः । निमः समीपस्थां काश्चित् गुहां स्वच्छीकृत्य प्रशस्ते स्थले आहारपदार्थान् स्थापितवान् । ततः मेषाणां निमित्तं तेन एकः अस्थायी गोष्ठः निर्मितः । सर्वाणि कार्याणि समाप्य शुष्कपर्णानि सङ्गृह्य गुहायाः पुरतः राशीकृत्य तं पर्णराशिम् एव शय्यां परिकल्प्य सः सुखेन शयितवान् दीर्घतया पादौ प्रसार्य ।

सायं पर्वतप्रदेशं गत्वा तेन मेषाः गोष्ठं प्रति आनीताः । ततः रात्रिभोजनं समाप्य चन्द्रसरोवरदेवताम् अधिकृत्य विविधाः कथाः स्मरन् सः शयनं कृतवान् ।

मध्यरात्रसमयः । कौमुदीप्रकाशे सरोवरजले पर्वतस्य प्रतिबिम्बं यत् दृश्यते तत् निर्निमेषं पश्यन् शयितवान् आसीत् निमः । तदवसरे कश्चन आह्वानध्वनिः तेन श्रुतः । निमः एतं श्रुत्वा नितराम् आश्चर्यचकितः । मम भ्रान्तिः स्यात् इति अचिन्तयत् सः । तावता पुनरपि आह्वानध्वनिः श्रुतः । सः मुखं परिवर्त्य अपश्यत् । सरोवरतीरसमीपे श्वेतवस्त्रधारिणी काचित् सुन्दरी तरुणी स्थिता आसीत् ।

सा मन्दगत्या निमस्य समीपम् आगत्य मृदुना मधुरेण च स्वरेण अवदत् - ''अहमस्मि चन्द्रसरोवरीया विद्याधरी । भवतः स्नेहः प्राप्तव्यः इति आ बहुभ्यः दिनेभ्यः अहं प्रतीक्षमाणा आसम् । सुन्दरः तरुणः भवान् । भवतः नाम किम् ?'' इति ।

''मम नाम निमः इति । हान्सेग्रामवासी अहम् । मेषाणां चारणाय अत्र आगतः अस्मि । भवत्याः विषये मया विविधाः कथाः श्रुताः आसन् एव । किन्तु अद्यावधि केनापि भवती न दृष्टा इति श्रुतं मया'' इति अवदत् निमः ।



''भवान् यदा अत्र उपस्थितः भवति तदा वसन्तः एव मम । भवतः अनुपस्थितिः तु हेमन्तायते । शयानं भवन्तम् अहं बहुषु दिनेषु दृष्टवती । अहं तु रात्रौ एव सरोवरात् बहिः आगन्तुं शक्नोमि, न तु दिने । अद्य भवान् जागरितः दृष्टः मया । अतः भवत्समीपम् आगन्तुं मया धैर्यं कृतम् । भवान् किं मया सह आगन्तुम् अर्हेत् ?'' इति अनुरागमिश्रितेन स्वरेण अपृच्छत् सा विद्याधरी ।

निमः तु प्रत्युत्तरं किं वक्तव्यम् इति



सर्वाभ्यः दिग्भ्यः आगताः विद्याधर्यः तौ प्रासादस्य अन्तर्भागं नीतवत्यः ।

निमः अवगतवान् यत् एषा प्रायः विद्याधरीणां राज्ञी स्यात् इति । विद्याधर्यः तं मृदुले सुगन्धमये तल्पे उपवेशितवत्यः । स्वादूनि फलानि, मधुरः फलरसः च ताभिः आनीतः निमविद्याधरराज्ञ्योः कृते सुवर्णस्थालिकास्थैः सुवर्ण-चषकैः । काचित् विद्याधरी राज्ञ्यै एकं व्यजनम् आनीय दत्तवती । तत् पतङ्गपक्षैः निर्मितम् आसीत् । तेन मृदु वीजितवती विद्याधरराज्ञी । अल्पे एव काले निमः निद्रावशं गतः । उषःकाले तेन जागरणं प्राप्तम् । राज्ञी तं सरोवरस्य ऊर्ध्वभागम् आनीय तीरं प्रापय्य अवदत् - ''अद्य रात्रौ अपि भवता मम प्रासादं प्रति आगन्तव्यम्'' इति ।

अजानन् मौनेन स्थितवान् । विद्याधरी अग्रे आगत्य निमस्य हस्तं प्रीत्या गृहीत्वा सरोवरं प्रति प्रस्थितवती । निमस्य हस्तं गृहीत्वा एव सा जले पदानि स्थापितवती स्थले इव । आश्चर्यं नाम निमः अपि जलस्य उपरि सञ्चारे समर्थः जातः आसीत् । यदा सरोवरस्य मध्य-भागः प्राप्तः तदा सा कामपि मायां कृतवती । तदा जलं विभक्तं जातम् । तत्र कश्चन सोपान-मार्गः दृष्टः । उभौ अपि तेन मार्गेण एकं सुन्दरं प्रासादं प्राप्तवन्तौ । प्रासादभित्तिषु तत्र तत्र वज्राणि संसक्तानि दृश्यन्ते स्म । तानि नक्षत्राणि इव प्रकाशं प्रसारयन्ति स्म । भवन-तलं तु सुवर्णपटलेन आवृतम् आसीत् । तावता

''अवश्यम् आगमिष्यामि'' इति प्रतिज्ञाय निमः गुहां प्रतिगतवान् ।

एवं प्रतिदिनम् अपि निमः विद्याधरराज्ञ्याः प्रासादं प्रति गतवान् । अनन्तरदिने प्रातःकाले सा विद्याधरराज्ञी तं तीरं प्रापयति स्म । यथा यथा ग्रीष्मकालः अतिक्रान्तः तथा तथा निमस्य चिन्ता प्रवृद्धा - शीतकाले किं भवेत् ? इति ।

शीतकालः उपस्थितः एव । शीतवायुः आगतः । सरोवरस्य जलस्य हिममयता अपि आरब्धा । अतः निमः विद्याधरराज्ञीम् अवदत् - ''पर्वतप्रदेशे तृणानि विरलानि जातानि । शैत्यम् अपि वर्धमानम् अस्ति । मया मेषाः

इतः नेतव्याः एव । अन्यथा ते अत्र मरणं प्राप्नुयुः'' इति ।

एतत् श्रुत्वा विद्याधरराज्ञी विषादेन तम् अवदत् - ''निम ! आवयोः वियोगः तु अपरिहार्यः । किन्तु यदा पर्वतपरिसरे कोमल-तृणानि उत्पत्स्यन्ते तदा अवश्यं भवता उप-स्थातव्यम् । तावत् अहं कष्टेन एव दिनानि यापयिष्यामि । आवयोः मेलनं यत् जातं तत् कुत्रापि न वक्तव्यं भवता'' इति ।

''निश्चयेन आगमिष्यामि'' इति प्रतिज्ञात-वान् निमः । राज्ञी तं सरोवरतीरं प्रापितवती । यावत् सा सरोवरमध्ये अदृश्यतां गता तावत् तस्याः निर्गमनं पश्यन् स्थितवान् निमः । यदा सा दृष्टिपथात् अपगता तदा दीर्घं निश्श्वस्य सः मेषगोष्ठं गतवान् । ततः मेषैः सह ग्रामं प्रति पदानि स्थापितवान् ।

एतदवसरे चन्द्रसरोवरात् आगतः देवरः अधिकतया म्लानमुखः चिन्तामग्नः च जातः अस्ति इत्येतत् लक्षितवती दोलमा । क्वचित् तया यदि किमपि उच्येत तर्हि विलम्बेन उत्तरं ददाति स्म निमः । प्रतिदिनम् अपि प्रातः उत्थाय दिगन्तं पश्यति स्म सः ।

अथ कदाचित् निमः पर्वतप्रदेशं प्रति गमनाय सन्नाहम् आरब्धवान् । यदा सः आहारपदार्थान् अयाचत तदा दोलमा नितराम् आश्चर्ययुक्ता जाता । ''निम ! इतोऽपि ग्रीष्मकालः न उपस्थितः । कुज्झटिकापातः पूर्णतः न स्थगितः । इदानीं तत्र गतं चेत् मेषाः मरणं प्राप्नुयुः । पक्षः ततोऽपि अधिकः कालः वा अपेक्षितः भवेत् हिमस्य अपगमाय'' इति अवदत् सा ।

निमः प्रत्युत्तरं किमपि न दत्तवान् । तस्मात् क्रुद्धा दोलमा तर्जनस्वरेण अवदत् - ''भोः, अत्र आगत्य काष्ठानि छिनत्तु तावत्'' इति । तस्यापि कोऽपि प्रतिस्पन्दः न आसीत् निमस्य । एतत् दृष्ट्वा प्रवृद्धकोपा दोलमा अत्युच्चस्वरेण अवदत् - ''अये निम ! का सा चिन्त्यते भवता ? किं चन्द्रसरोवरस्य विद्याधरी भवतः मनः प्रविष्ट-वती अस्ति ? किं महाराजस्य भवतः सेवायै मया सुवर्णपात्रेण सूपः आनीय दातव्यः ?'' इति ।

निमः प्रायः कदापि प्रत्युत्तरं न वदति । किन्तु न ज्ञायते अद्य किं जातम् इति, सः महता असन्तोषेण अवदत् - ''भवत्या सूपः दीयते ? स च डाकिन्याः सुरा इव भवति । मेषः अपि तस्य सेवने न उत्सहते । धिक्



भवत्याः सुपम्'' इति ।

दोमला एतं विरोधं न असहत । सा शूलेन विद्धा इव क्रुद्धा सती अवदत् - ''मया दीयमानः आहारः भवतः दृष्ट्या कःपदार्थः । राज्ञे भवते चन्द्रसरोवरस्य राज्ञी सुवर्णपात्रेण फलरसम् आनीय ददाति । एवं ननु ?'' इति ।

''आम् ! किं तत्र आश्चर्यम् ? गते ग्रीष्मकाले सा प्रतिदिनं मां स्वभवनं नयति स्म । प्रतिदिनं सुवर्णचषकेण अपूर्वस्वादयुक्तं फलरसं ददाति स्म अपि'' इति अवदत् निमः । झटिति तेन विद्याधरीवचनं स्मृतम् - 'आवयोः मेलनस्य वार्ता कुत्रापि न वक्तव्या' इति ।

''एवम् ! तर्हि भवान् किमर्थं वा तस्याः विद्याधर्याः गृहम् एव न गच्छेत् ?'' इति अवदत् दोलमा । किञ्चिदनन्तरं सा अचिन्तयत् यत् मया एतादृशं वचनं न वक्तव्यम् आसीत् इति । किन्तु तावता मन्दं पदानि स्थापयन् निर्गतवान् आसीत् निमः ।

सः ततः निर्गत्य मन्दिरं किञ्चन प्राप्य प्रार्थितवान् - ''भगवन् ! ग्रीष्मः अचिरात् एव यथा प्राप्येत तथा अनुगृह्णातु'' इति । ततः गृहं प्रत्यागत्य सः काष्ठच्छेदने उद्युक्तः जातः । काष्ठच्छेदनशब्दं श्रुत्वा बहिः आगत्य द्वारे स्थित्वा दोलमा मन्दहासं प्रकटितवती ।

अनन्तरदिने प्रातः निमः गृहात् बहिः आगत्य अपश्यत् - दूरस्थे पर्वते हरिन्मयता किं दृश्यते इति । पर्वतः हिममयः एव दृष्टः । तेन पुनरपि मन्दिरं गत्वा प्रार्थितम् - ''भगवन् ! कदा वा ग्रीष्मः उपस्थितः भवेत् ?'' इति ।

ग्रीष्मकालः तु ऋतुनियमानुगुणम् उपस्थितः । निमः चन्द्रसरोवरपरिसरं प्रति धावितवान् । गुहां स्वच्छीकृत्य वासयोग्यां कृत्वा मेषाणां वासाय पर्णकुटी अपि तेन निर्मिता । रात्रौ सरोवरतीरे तेन उपविष्टं विद्याधरराज्ञीं प्रतीक्षमाणेन । सरोवरे तरङ्गाः तेन दृष्टाः, न तु विद्याधरराज्ञी । सा किमर्थं न आगता इत्यपि तेन न अवगतम् ।



तस्य चित्तस्वास्थ्यं विनष्टम् । सः किमपि कर्तुम् अशक्तः जातः । 'सा तु न आगच्छेत् । अतः मया एव तस्याः समीपं गन्तव्यम्' इति सङ्कल्प्य सः सरोवरजले पदानि स्थापितवान् । तदनन्तरकाले सः केनापि न दृष्टः एव ।

# चन्दमामाप्रश्नावली - २

Co-sponsored by
Infosys FOUNDATION,
Bangalore

यः समुचितम् उत्तरं दास्यति सः अर्हति रू. २५०/ - पारितोषिकत्वेन*

अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्क.न् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आं, लीलाविषयः एव अस्ति अयम् ।

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

**भवद्भिः करणीयम्** - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतं (पिन्कोड्सहितं) च प्रेषयन्तु । ३. ग्राहकता अस्ति चेत् ग्राहकसङ्ख्या अपि लेखनीया । ४. पिहितपत्रस्य उपरि **चन्दमामाप्रश्नावली - २** इति लेखनीयम् । ५. मार्च्समाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ६. मेमासे परिणामः प्रकाशयिष्यते ।

१. संस्कृतभाषायां रामायणस्य पाठान्तराणि कति सन्ति ?

२. धरित्रीदिवसः जलदिनोत्सवः च कदा आचर्यते ?

३. ''मनुष्यं विपत्तिकाले उद्धरति धैर्यम् । कदाचित् अपि धैर्यच्युतिम् अप्राप्य धीराः भवन्तु'' इत्येतस्य गुरूपदेशस्य अनुगुणं व्यवहरतः युवराजस्य युवमार्गदर्शकः कः अस्ति ? तस्य युवकस्य नाम किम् ? कस्यां कथायां तत् पात्रम् अस्ति ?

४. जगत् पञ्चभिः कालुष्यैः ग्रस्तम् अस्ति । तेषां कारणानि अपि पञ्च । तानि कानि ?

५. 'लायहरोबा' इत्येतत् किम् इति किं भवन्तः जानन्ति ?

६. 'अधिकारदर्पेण युक्ताः जनाः दुर्बलान् पीडयन्ति । एतादृशाः गर्वोपिताः जनाः अन्ते पराजयं प्राप्नुवन्ति, तेषां गर्वभङ्गः च भवति' इत्येतत् सत्यं ज्ञापयति ग्रीक्देशीया काचित् प्राचीनकथा । तस्याः कथायाः नाम, कथानायकस्य नाम च किम् ?

७. अधोलिखिते चित्रे स्थिताः एते त्रयः के के ?



# वाचकानां कृते कथास्पर्धा - परिणामः

## व्यवहारोऽस्तु मित्रवत् (अक्टोबर् - ०५)



"भवान् आदेशबोधनाय कीदृशं प्रयासं कृतवान् ?" इति पृष्टवान् गौतमः । "खाद इति अहम् आज्ञापयामि स्म । किन्तु सः खादनाय न प्रवर्तते । कार्याय गन्तव्यम् इति आदिश्य अहं तं ताडयामि स्म । तथापि सः न पदम् उन्नयति । अहं तं पुनः पुनः ताडयामि । स तु मम आदेशं न पालयति एव" इति अवदत् सुभाषः ।

एतत् श्रुत्वा गौतमः अवदत् - "भवता गर्दभविषये मित्रेण इव व्यवहारः न कृतः । सः भवता दण्डितः । अतः सः भवन्तं शत्रुं भावयन् भवतः आदेशं न पालितवान् । मया तु अन्यविधः एव व्यवहारः कृतः । खाद इति तं वदन् तस्य शरीरस्य उपरि प्रीत्या हस्तं स्थापयन् अहं खादनाय तं प्रेरितवान् । एवं प्रीत्या व्यवहरन् एव अहं सर्वेषु कार्येषु तं प्रवर्तितवान् । यः प्रीत्या व्यवहरति तस्य आदेशं पालयति जन्तुः । एतत् एव मम रहस्यम्" इति ।

***- मनाली जैन, ई - ७४१, वैशालीनगरम्, जयपुरम् - ३०२०२१***

## परिश्रमस्य फलं मधुरम् (नवम्बर् - ०५)



परिश्रमी नाविकः पीताम्बरेण दत्तं धनं कृतज्ञतापूर्वकं स्वीकृतवान् । आश्चर्येण पश्यन्तं पीताम्बरं सः अवदत् - "अन्ये नाविकाः यावत् शुल्कं स्वीकुर्वन्ति ततोऽपि न्यूनं स्वीकरोमि अहम् । एतस्मात् मया प्राप्यमाणे लाभे न्यूनता भवति । किन्तु अल्पशुल्कस्वीकारकारणतः बहवः जनाः मत्समीपम् एव आगच्छन्ति । अन्ये नाविकाः अधिकधनाशया तीरे कार्यरहिताः तिष्ठन्ति । अहं तु निरन्तरं नौकायाः नयनानयनं कुर्वन् भवामि । यतः तावन्तः यात्रिकाः मया प्राप्यन्ते । अधिकजनानां प्राप्त्या मम आयः अपि अधिकः । एतस्मात् श्रमः अधिकः भवेत् नाम । किन्तु ततः आनन्दः एव मम । मम प्रसन्नता अपि यात्रिणाम् आकर्षणस्य अपरं कारणम् । अन्ये नाविकाः तु अल्पस्य आयस्य कारणतः खिन्न-मुखाः भवन्ति । अतः ते यात्रिणां चित्तस्य आकर्षणे अपि असमर्थाः" इति ।

तावता पालनपुरं प्रति गन्तुम् उत्सुकाः पञ्चषाः जनाः तत्र उपस्थिताः । ते अपि अल्पशुल्कवार्तां ज्ञात्वा आश्चर्यम् अनुभवन्तः नौकायाम् उपविष्टवन्तः । नाविकः आनन्देन नौकाचालनम् आरब्धवान् ।

***- अनुभव अग्रवालः बलरामपुरम् - २७१ २०१ (उ.प्र.)***

# चित्र कथापूर्तिः



## चक्रधरपिशाचस्य हृदयपरिवर्तनम् (डिसेम्बर् - ०५)

रामः अचिन्तयत् - 'पिशाचः प्रायः पूर्वस्मिन् जन्मनि उत्तमकार्यं अकुर्वन् जनान् पीडितवान् स्यात् । तस्मात् एव तेन पिशाचजन्म प्राप्तं स्यात् । जीवने शान्तिं प्राप्तुम् अशक्तः सः अशान्तिजनकानि कार्याणि कुर्वन् स्यात् । अतः सः अशान्तः आत्मा शान्तिं यथा प्राप्नुयात् तथा मया किमपि करणीयम्' इति ।

रामः अनन्तरदिनतः गृहे (यच्च पूर्वं चक्रधरस्य आसीत् ।) उत्तमं पाकम् आरब्धवान् । रात्रौ सः उत्तमं पाकं, क्षीरं च सज्जीकृत्य पाकशालायां स्थापयति स्म । कदाचित् रामस्य अनुपस्थितौ तत्र आगतः पिशाचः पाकशालायां स्थापितम् उत्तमं पाकदुग्धादिकम् अपश्यत् । सः आकण्ठं भुक्त्वा क्षीरम् अपिबत्, तृप्त्या अगच्छत् च । कानिचन दिनानि एवमेव प्रवृत्तम् । ततः पिशाचः अचिन्तयत् यत् यः उत्तमं भोजनं ददाति तस्य पीडनं न युक्तम् इति । अतः सः दुष्कार्यम् अत्यजत् । उत्तमानि कार्याणि अपि तेन आरब्धानि । तस्मात् सः पिशाचजन्मतः मुक्तिं प्राप्य उत्तमे परिवारे जन्म प्राप्नोत् । एवं रामस्य विवेकपूर्णः व्यवहारः चक्रधरपिशाचस्य परिवर्तनस्य सत्कुलप्रसुतेः च कारणं जातः ।

***- चर्चितजैनः जयपुरम् - ३०२०११ (राजस्थानम्)***



## विदूषकस्य चातुर्यम् (जनवरी - ०६)

राज्ञः वचनं श्रुत्वा विदूषकः क्षणकालं मौनम् आश्रितवान् । तदा राजपरिवारजनाः महान्तं सन्तोषम् अनुभूतवन्तः यत् एतदवसरे समुचितोत्तरदानेन राजानं पराजेतुं विदूषकः असमर्थः जातः इति । तावता विदूषकः अवदत् - ''महाराज ! भवान् एव एतस्य कारणम् । शासनव्यवहारसम्बद्धम् एतत्'' इति । ''भवतः दौर्बल्यस्य मम शासनव्यवहारस्य च कः सम्बन्धः ?'' इति आश्चर्येण अपृच्छत् राजा । ''सम्बन्धः अस्ति महाराज ! भवता यत् अल्पं वेतनं दीयते तदेव एतस्य कारणम् । मया यत् वेतनं प्राप्यते तस्य भूयान् भागः भवता दत्तस्य अश्वस्य पोषणाय व्ययितः भवति । अवशिष्टः अत्यल्पः भागः स्वनिमित्तम् उपयुज्यते मया । उत्तमस्य आहारस्य अप्राप्त्या एषा दुर्बलता मम । कस्मै कियत् वेतनं दातव्यम् इति निर्णयः भवता एव खलु क्रियते ?'' इति । एतत् श्रुत्वा राजा हतवचनः जातः । परिवारजनाः लज्जया शिरः अधः कृतवन्तः । अनन्तरदिने एव राजा विदूषकस्य वेतनं वर्धितवान्, योग्य पुरस्कारं दत्त्वा तं सत्कृतवान् च ।

***- सङ्कल्पसिंहः गहरवार, गाजियाबाद - २०१ ०१०***



# सफलं देशाटनम्

जयदेवः विशालदेशस्य शासकः । विक्रमः तस्य पुत्रः । यदा युवराजपदे तस्य अभिषेकः जातः तदा सः पितरम् अवदत् - ''राजपदस्य भारः वोढव्यः चेत् अनुभवः आवश्यकः । अतः अहं देशाटनं कर्तुम् इच्छामि । कृपया एतदर्थम् अनुज्ञां ददातु, आशीर्वादेन अनुगृह्णातु च'' इति ।

तदा जयदेवः अवदत् - ''छद्मवेषं धृत्वा देशे सञ्चारः, जनानां कष्टसुखादिकं ज्ञातुं यत्नः च राजपदम् आरोढुम् इच्छता अवश्यं करणीयः एव । किन्तु छद्मवेषेण सञ्चारः अपायबहुलः । अतः भवान् युवराजः सन् देशसञ्चारं करोति चेदेव वरम्'' इति ।

एतत् श्रुत्वा विक्रमः अवदत् - ''छद्मवेषं धृत्वा देशसञ्चारात् एव जनानां सुखदुःखादिकं ज्ञायते । युवराजत्वेन गतं चेत् जनाः मां वस्तुस्थितिं न वदेयुः । वस्तुस्थितिः ज्ञाता चेत् एव जनहितकार्यं मया कर्तुं शक्येत । भवान् इव अहम् अपि उत्तमराजत्वेन ख्यातिं प्राप्तुम् इच्छामि । अतः कृपया छद्मवेषं धृत्वा गमनाय अनुज्ञां ददातु'' इति ।

राजा तस्मै अनुज्ञां दत्तवान् । अतः विक्रमः देशाटनाय निर्गतवान् । तेन सह मन्त्रिणः पुत्रः विवेकः अपि निर्गतवान् । उभौ अपि सामान्यवेषं धृत्वा अश्वम् आरुह्य ततः निर्गतवन्तौ । मासं यावत् ताभ्यां देशे अटनं कृतम् । सर्वत्र अपि प्रार्थनां विनैव तयोः सर्वाः अपेक्षाः पूर्णाः भवन्ति स्म । एतत् दृष्ट्वा युवराजः विक्रमः अचिन्तयत् यत् मम पितुः शासनम् उत्तमम् अस्ति, अतः एव सर्वे जनाः एवम् अपरिचितेषु अपि महान्तम् आदरं प्रकटयन्ति इति ।

मासं यावत् प्रयाणं कृत्वा तौ राजधानीं प्रतिगमनाय उद्युक्तौ । सायङ्कालसमये तौ एकम् अरण्यं प्राप्तवन्तौ ।

विक्रमः वृक्षम् आरुह्य परितः दृष्टिं प्रसार्य

अवदत् – ''इतः अनतिदूरे किञ्चन भवनं दृश्यते । तत् प्राचीनं मन्दिरं भवनं वा स्यात् । आवाभ्यां प्रायः रात्रिः अत्र यापयितुं शक्येत'' इति ।

ततः उभौ अपि तत्र गतवन्तौ । तत्र एकं मन्दिरं ताभ्यां दृष्टम् । मन्दिरस्य प्रवेशद्वारं पिहितम् आसीत् । तौ उभौ अपि मन्दिरस्य पुरतः उपविष्टवन्तौ । यावत् तौ अग्रिममार्गं चिन्तयन्तौ आस्तां तावता कश्चन शकटः तत्र उपस्थितः । मन्दिरस्य अर्चकः स्थालिका-हस्तः सन् यानात् अवतीर्णः ।

अर्चकः तौ अवदत् – ''एतस्य मन्दिरस्य आराध्यदेवी चन्दना । एतस्मिन् अरण्ये चन्दन-वृक्षाः बहवः । एतस्मिन् अरण्ये राजगुरोः एव अधिकारः । इतः अर्धघण्टाप्रयाणेन कश्चन ग्रामः प्राप्यते । तत्र मम वासः । अद्य रात्रौ भवन्तौ मम गृहे वासं कर्तुम् अर्हतः । राजगुरोः अनुजः एतस्य मन्दिरस्य धर्मदर्शी अस्ति । अहं राजगुरोः पितृव्यस्य पुत्रः । राजनीतिशास्त्रम् अधीतं मया । राजास्थाने उद्योगः यावत् न प्राप्यते तावत् एतत् अर्चककार्यं करोतु इति राजगुरुः माम् उक्त-वान् अस्ति'' इति ।

अर्चकस्य निवेदनस्य अनुगुणं विक्रमः विवेकवर्मा च मन्दिरस्य अन्तः गतवन्तौ । रक्तचन्दनकाष्ठेन निर्मिता चन्दनादेव्याः मूर्तिः रमणीया आसीत् । विक्रमः विवेकवर्मा च भक्त्या नेत्रे निमील्य देवीं नमस्कृतवन्तौ ।

''चन्दनादेवी भाविनं महाराजं मन्त्रिणं च आशीर्वादेन अनुगृह्णाति'' इति उक्तवान् अर्चकः । एतत् श्रुत्वा तौ आश्चर्यचकितौ ।



विक्रमः असन्तोषेण अवदत् – ''कीदृशम् एतत् वचनम् उच्यते भवता ?'' इति ।

तदा अर्चकः निर्भयतया एव अवदत् – ''प्रभो ! अलम् असन्तोषेण । मया पूर्वम् एव उक्तं यत् अहं राजनीतिशास्त्रस्य अध्ययनं कृतवान् अस्मि इति । राजास्थाने उद्योगं प्राप्तुम् अवकाशं प्रतीक्षमाणः अस्मि । भवन्तौ देशाटनाय उद्युक्तौ युवराजमन्त्रिपुत्रौ इति विशेषक्लेशं विना ज्ञातुं शक्नोमि अहम् । भवतः व्यवहारः राजसः अस्ति । उत्तमः अश्वः सञ्चाराय उपयुज्यते यत् तत् मम वचनं प्रमाणीकरोति'' इति ।

अर्चकस्य वचनं श्रुत्वा उभौ अपि आश्चर्य-युक्तौ जातौ ।

अर्चकः पुनः अवदत् – ''देशाटनस्य मुख्यः उद्देशः अस्ति परिशीलनम् । जनान्



परिशील्य तत्तज्जनस्य योग्यताम् अवगत्य कः कुत्र नियोक्तव्यः इति निर्णयः करणीयः देशाटनकर्त्रा । देशाटनपरम्परां पालयति भवति राज्ञः विशेषदृष्टिः स्यादेव । अतः भवतोः सञ्चारे कोऽपि क्लेशः यथा न भवेत् तथा व्यवस्थां सः कृतवान् अस्ति । किन्तु तेन तथा कृतम् इति प्रायः भवन्तौ न जानीतः । जनाः भवन्तौ अभिज्ञाय अपि अभिज्ञानं न प्राप्तवन्तः इव व्यवहृतवन्तः प्रायः । किन्तु यथा अहं तथा बहवः भवन्तौ अभिज्ञातवन्तः तु स्युः एव'' इति ।

विक्रमः अङ्गीकारपूर्वकं शिरः सञ्चाल्य अवदत् - ''दर्शनसमनन्तरं मया चिन्तितम् आसीत् यत् भवान् कश्चन सामान्यः अर्चकः स्यात् इति । किन्तु इदानीं मया चिन्त्यते - राजनीतिशास्त्रसम्बद्धाः बहवः अंशाः मया ज्ञातव्याः सन्ति इति । अतः अहं विवेकवर्मा च कानिचन दिनानि भवता सह वासं कर्तुम् इच्छावः'' इति ।

अर्चकः एतं प्रस्तावं सहर्षम् एव अङ्गीकृतवान् ।

ततः तौ अर्चकेन सह तदीयं गृहं प्रति प्रस्थितवन्तौ । अर्चकः शकटेन प्रस्थितवान् । विक्रमः विवेकवर्मा च अश्वम् आरुह्य तम् अनुसृतवन्तौ ।

अर्चकस्य गृहं यदा प्राप्तं तदा पञ्जरस्थौ उभौ सुन्दरौ शुकौ राजकुमारमन्त्रिपुत्रौ दृष्ट्वा अवदताम् - ''आगच्छताम् अन्तः । भवतोः स्वागतम्'' इति । पुनः तौ अवदताम् - ''अम्ब ! उभौ अतिथी आर्येण आनीतौ स्तः'' इति ।

''भवतोः आर्यस्य एषा प्रवृत्तिः न नूतना । रात्रिसमये मन्दिरम् आगतान् सर्वान् गृहम् आनयति सः । शुकौ सम्भाषणं बोधयितुम् अपि समर्थः सः, अल्पां भूमिम् अपि सम्पादयितुं तु असमर्थः एव'' इति वदन्ती द्वारसमीपम् आगतवती अर्चकस्य पत्नी ।

विक्रमं विवेकवर्माणं च तत्र दृष्ट्वा सा आश्चर्यान्विता जाता । यावत् सा किमपि वक्तुम् उद्युक्ता तावता विक्रमः अवदत् - ''आचार्यः शुकौ सम्भाषणस्य पाठने अपि समर्थः एव ! एषः निश्चयेनास्ति महान् । आवाम् एतस्मात् राजनीतिम् अध्येतुम् आगतौ । अत्र वासाय अनुज्ञा कृपया देया तत्रभवत्या'' इति ।

एतत् श्रुत्वा हसन्ती अर्चकपत्नी अवदत् - ''मम आर्यपुत्रः राजगुरोः पितृव्यस्य पुत्रः । एषः चिन्तयति यत् राजगुरुः कदाचित् वा

आस्थाने उद्योगं दापयिष्यति इति । किन्तु तदीया एषा आशा पूर्णा न भविष्यति इति भाति । भवादृशान् पाठयता यदि तेन किञ्चित् धनं सम्पादितं स्यात् तर्हि एवम् अर्चकवृत्तिः करणीया न अभविष्यत् । मम तु स्पष्टम् अस्ति यत् राजगुरुः एतस्मै आस्थाने उद्योगं न दापयिष्यति इति । यदि आस्थाने प्रतिद्वन्द्वी कश्चित् भवेत् तर्हि भाविनि काले मम स्थानस्य एव च्युतिः भवेत् इति भीतिः तस्य । तादृशे राजगुरौ विश्वासं कुर्वतः एतस्मात् किं वा अधीयीरन् भवन्तः ?'' इति ।

''आवां तु राजनीतिम् अध्येष्यावहे'' इति उक्तवन्तौ राजकुमारः मन्त्रिपुत्रः च ।

तदा अर्चकस्य पत्नी हसन्ती पुनः अवदत् – ''यः स्वस्मै रोचते तस्य मार्गदर्शनं पौनःपुन्येन प्राप्नुवन्ति राजानः । तान् परितः स्थिताः जनाः तु वटवृक्षाः इव । ते स्वसमीपे अन्यस्य वर्धनं न सहन्ते । स्वयं च विशालतया वर्धन्ते । अतः प्रतिभावन्तः जनाः राज्ञः दर्शनम् एव न प्राप्नुवन्ति । तस्मात् तादृशानां स्थितिं राजा न जानाति एव । यः प्रतिभावताम् अभिज्ञानं प्राप्नुयात् तादृशस्य निर्माणम् अहं करोमि इति विचिन्त्य मम आर्यपुत्रेण राजनीतिः अधीता । किन्तु राजदर्शनं, राजास्थाने उद्योगः वा तेन न प्राप्तः एव । एतादृशात् भवन्तः कीदृशीं वा राजनीतिम् अधीयीरन् ?'' इति ।

पत्न्याः कथनं शृण्वन् अर्चकः मन्दहासपूर्वकं युवराजं मन्त्रिपुत्रं च अपश्यत् ।

तदा विक्रमः अवदत् – ''देशाटनार्थम् आगतौ आवां कौ इति भवत्या अभिज्ञातम् अस्ति प्रायः । प्रतिभावतः अभिज्ञानं, योग्ये स्थाने तस्य नियुक्त्यर्थं प्रयासः च देशाटनस्य उद्देशः इति भवत्या ज्ञापितम् अस्ति अपि । एवं ज्ञापयन्त्या भवत्या महान् एव उपकारः कृतः । एतस्मात् आवां कृतज्ञौ स्वः । अर्चकं गुरुं मत्वा अहं राजनीतेः सर्वाणि सूक्ष्मरहस्यानि ज्ञास्यामि । मम शासनकाले तस्य मार्गदर्शनम् अवश्यं प्राप्स्यामि च'' इति ।

एतदनन्तरं राजत्वं प्राप्तवान् विक्रमः स्वस्य आस्थाने अर्चकाय, तत्सदृशेभ्यः अन्येभ्यः दक्षेभ्यः बहुभ्यः च स्थानं कल्पितवान्, उत्तमशासकत्वेन कीर्तिं प्राप्तवान् च ।



# शत्रोः जयाय आश्रितः उदात्तः मार्गः

राजा फिलिपः मेकडोनियादेशं पालयति स्म । (क्रि.पू. ३८२ - २३२) सः प्रसिद्धस्य चक्रवर्तिनः अलेक्साण्डरस्य पिता । ग्रीक्राजेषु महाशक्तिशाली आसीत् सः एव । तस्य शक्तिः यथा, तथैव तदीया ज्ञानप्रियता अपि प्रसिद्धा एव । अतः एव सः स्वस्य पुत्रस्य अध्यापकत्वेन प्रसिद्धं तत्त्वशास्त्रज्ञम् अरिस्टाटलम् एव नियुक्तवान् आसीत् ।



तस्य देशस्य कस्मिंश्चित् कोणे अर्केडियसः नाम कश्चन सामान्यः भूस्वामी निवसति स्म । सः सर्वदा राज्ञः फिलिपस्य व्यवहारान् निन्दति स्म । एषा वार्ता राज्ञा पुनः पुनः श्रुता आसीत् अधिकारिणां द्वारा, गुप्तचराणां द्वारा, अन्येषां मुखात् च । सः राज्ञः महावैरी इव व्यवहरति इति सर्वे उक्तवन्तः आसन् ।

अर्केडियसः यत्र वसति तं प्रदेशं प्रति कदाचित् अगच्छत् राजा । सः स्वस्य अधिकारिणाम् आप्तानां च पुरतः अघोषयत् - ''अद्य अहं वैरिणं निवारयिष्यामि'' इति ।

''युक्तम् एव । कदापि शत्रुः न उपेक्षणीयः'' इति अवदन् सर्वे ।

''भवतु । शत्रुं नामावशिष्टं करिष्यामि'' इति दृढस्वरेण अवदत् राजा ।

राजाज्ञां प्राप्य अर्केडियसः अनन्यगतिकतया राज्ञः समीपम् आगतवान् । पलायनाय तेन अवसरः न प्राप्तः आसीत् । गृहात् प्रस्थानात् पूर्वं सः गृहजनानां पुरतः अश्रूणि अस्त्रावयत् । गृहजनाः सर्वे अपि अश्रूणि अस्त्रावयन् । राजा तं शूलम् आरोपयेत् इति भीतिः आसीत् तेषाम् । शूलारोपणं कदाचित्

न स्यात् चेदपि आजीवनं कारागारवासः तु स्यात् एव इति सर्वे चिन्तयन्ति स्म ।

अर्केडियसः भीत्या एव राज्ञः प्रकोष्ठं प्रविष्टवान् । राजा सर्वान् आज्ञापितवान् यत् सर्वैः इतः निर्गन्तव्यम् इति । अङ्गरक्षकाः अपि बहिः गताः । अङ्गरक्षकाः द्वारात् बहिः एव प्रतीक्षमाणाः आसन् राज्ञः सूचनानुगुणं शत्रोः शवम् आकृष्य नेतुम् ।



घण्टानन्तरं सर्वे महत् आश्चर्यम् अनुभूतवन्तः । यतः राजा फिलिपः अर्केडियसः च सुहृदौ इव सम्भाषमाणौ हसन्तौ प्रकोष्ठात् बहिः आगतवन्तौ । राजा समीपस्थम् अधिकारिणम् आज्ञापितवान् यत् प्रभूतानि उपायनानि दत्त्वा एतं सगौरवं रथेन गृहं प्रापय्य आगच्छतु इति ।

''महाराज ! किम् एतत् ? शत्रुता समापयिष्यते इति भवता पूर्वं प्रतिज्ञातम् आसीत् खलु ?'' इति अपृच्छत् कश्चित् कुतूहलं निरोद्धुम् अशक्नुवन् ।

''मया शत्रुः निवारितः एव । इदानीं मम शत्रुः लोके नास्ति, अपि तु मित्रम् अस्ति । एषः अर्केडियसः नितरां सज्जनः । मद्विषये अवास्तविकं किमपि किमपि श्रुतम् आसीत् तेन । केचन मम निर्णयाः सम्मताः न आसन् तस्य । अतः सः मम विरोधं करोति स्म । मया मिथ्याभावनाः निवारिताः । वस्तुस्थितिः विवृता । आत्मना कृताः दोषाः केचन अङ्गीकृताः । एतस्य सर्वस्य कारणतः तस्य मनसि स्थितः मद्विषयकः शत्रुताभावः अपगतः । परस्परावगमनात् सद्भावः निर्मितः । मया अवगतम् अस्ति यत् राज्ञा सता मया अनिच्छता अपि कानिचन कार्याणि करणीयानि इति'' इति अवदत् राजा ।

क्षणं विरम्य सः पुनः अवदत् - ''शत्रोः संहारः अपरस्य शत्रोः निर्माणस्य कारणम् । किन्तु शत्रुः एव मित्ररूपेण परिवर्तितः चेत् मित्रसङ्ख्या वर्धते, शान्तिश्च प्राप्यते'' इति ।

एवं राजा फिलिपः शत्रुतायाः निवारणाय उदात्तम् एव मार्गम् आश्रितवान् । हिंसामार्गं परित्यज्य सहानुभूतिपरम् अवगमनात्मकं मार्गम् अवलम्बितवान् सः एतदर्थम् ।



# नारायणपण्डितस्य वाक्शुद्धिः

माधवपण्डितः गुणनगरनिवासी । सः महारामभक्तः । तस्य पत्न्याः जानक्याः आसक्तयः अभिरुचयः च पत्यनुकूलाः एव आसन् । तस्य पुत्रः नारायणः गुरुकुले अध्ययनं करोति स्म ।

माधवपण्डितः रामकथां श्रावयति । बहवः जनाः तेन उच्यमानां रामकथां श्रोतुं तदीयं गृहम् आगच्छन्ति स्म । सन्तुष्टाः ते निर्गमनसमये यत्किञ्चित् यच्छन्ति । तेन सन्तुष्टः भवति स्म माधवपण्डितः । तेनैव तदीयः गृहव्ययभारः निरुह्यते स्म ।

नगरपालः गीर्वाणः कदाचित् तदीयां रामकथां श्रोतुम् ऐच्छत् । सः माधवपण्डितम् आनाय्य अवदत् – ''भवतः मुखात् रामकथा श्रोतव्या इति मम प्रबला इच्छा । अतः भवान् प्रतिदिनं मम आस्थानम् आगत्य रामकथां श्रावयतु । यावत् इच्छा तावत् धनं दास्यामि अहम्'' इति ।

तदा माधवपण्डितः अवदत् – ''महाशय ! धनं दत्त्वा रामकथां श्रोतुम् इच्छति भवान् । यदि मया भवतः आस्थाने रामकथा श्राव्येत तर्हि जनाः चिन्तयेयुः यत् अहं धनप्राप्तीच्छया रामकथां श्रावयामि इति । एतत् अहं न इच्छामि । ये जनाः भक्तिभावेन मत्समीपम् आगच्छन्ति तान् एव रामकथां श्रावयामि । अतः भवान् इच्छति चेत् मम गृहम् एव आगत्य रामकथां श्रोतुम् अर्हति । अहं प्रतिफलं किमपि न इच्छामि'' इति ।

एतस्य श्रवणात् यद्यपि गीर्वाणः कुपितः तथापि तं कोपं न दर्शितवान् सः ।

माधवपण्डितस्य पुत्रः नारायणपण्डितः विद्याभ्यासं समाप्य उद्योगप्राप्तीच्छया गीर्वाणसमीपं गतवान् । तस्य आगमनात् नितरां सन्तुष्टः गीर्वाणः अवदत् – ''भवतः पिता रामकथामात्रं श्रावयति । भवान् तु न केवलं रामकथाम्, अपि तु उपनिषद्वेदपुराणभारत-

काव्यनाटकादीनां विविधकथानां श्रावणे अपि समर्थः । अतः भवान् प्रतिदिनं मम आस्थाने कथां श्रावयतु । कथाश्रावणं तावत् उत्कृष्टं स्यात् यत् भवतः कथां श्रुतवन्तः जनाः भवत्पितुः समीपं गमनं परित्यजेयुः । अहं भवते प्रभूतं धनं दास्यामि'' इति ।

तदा नारायणपण्डितः अवदत् - ''कथानां श्रावणे ममापि आसक्तिः अस्ति । किन्तु भवान् अपेक्षते यत् पितुः प्रतिस्पर्धितया मया कार्यं करणीयमिति । एतत् उचितं न'' इति ।

''मम अपेक्षा नाम - भवान् पाण्डित्येन पितुः प्रतिस्पर्धी भवेत् इति । पुत्रात् प्राप्यमाणः पराजयः प्रशस्यते एव लोके । उत्तमः आयः अस्ति चेत् भवान् मातापितरौ योग्येन क्रमेण पालयितुम् अर्हति । अत्र अनौचित्यं न किमपि'' इति अवदत् गीर्वाणः ।

नारायणपण्डितः एतानि वचनानि युक्तानि अमन्यत । अतः गृहं प्रतिगतः सः पितरं प्रवृत्तं सर्वम् अवदत् । सर्वं श्रुत्वा पिता अवदत् - ''यत् युक्तं भासते तदनुगुणं क्रियताम् । किन्तु स्मर्तव्यं यत् जीवने धनम् एव प्राधान्यं न आवहेत् इति'' इति ।

नारायणपण्डितः गीर्वाणस्य आस्थाने उद्योगं प्राप्तवान् । गीर्वाणः नारायणपण्डितस्य कथाश्रावणकार्यक्रमस्य प्रचारं महता प्रमाणेन कृतवान् । एतस्य कारणतः नारायणपण्डितस्य कथां श्रोतुं बहवः आगतवन्तः । नारायणपण्डिताय गीर्वाणः प्रभूतं धनं दत्तवान् । तं बहुधा सत्कृतवान् च ।

नारायणपण्डितः नगरे एव विशालां भूमिं क्रीतवान् । लक्ष्मीनामिका तेन परिणीता अपि । तदीयानि दिनानि सुखमयानि जातानि ।



किन्तु एतस्मात् पिता माधवपण्डितः न सन्तुष्टः । गच्छता कालेन तेन उच्यमानां कथां श्रोतुम् आगच्छतां सङ्ख्या क्षीणा जाता । अतः तस्य चिन्ता प्रवृद्धा । तेषु एव दिनेषु रामः तस्य स्वप्ने प्रत्यक्षीभूय अवदत् - ''चक्रपुरे मम मन्दिरं जीर्णं जातम् अस्ति । भवान् तत्र गत्वा मम पूजां करोतु'' इति ।

जागरणं प्राप्तवान् माधवपण्डितः जनान् विचार्य चक्रपुरविषये विवरणानि सङ्गृहीतवान् । तदा तेन ज्ञातं यत् गुणनगरात् सुदूरे पर्वतपरिसरे सः ग्रामः अस्ति इति । 'तत्रत्या भूमिः कृषियोग्या एव । किन्तु वृष्टेः अभावतः तत्र महान् जलाभावः । एतस्मात् जनाः तं ग्रामं परित्यज्य अन्यत्र वासम् आरब्धवन्तः । इदानीं तत्र केचन वनवासिनः वसन्ति ।



मन्दिरस्य व्यवस्थां द्रष्टुं कोऽपि नास्ति' इत्यपि तेन ज्ञातम् ।

माधवपण्डितः पत्न्या सह चक्रपुरं गतवान् । वनवासिनां नायकः तौ दृष्ट्वा अवदत् – ''भवन्तौ यदि जीर्णे मन्दिरे पूजां करिष्यतः तर्हि सप्ताहं यावत् अहं भवतोः भोजनादिव्यवस्थां करिष्यामि । एतदभ्यन्तरे यदि कोऽपि चमत्कारः घटेत तर्हि भवन्तौ अत्रैव स्थातुम् अर्हतः । अन्यथा भवद्भ्याम् एषः ग्रामः परित्यक्तव्यः'' इति ।

माधवपण्डितः जानकी च राममन्दिरं गतवन्तौ । मन्दिरे दीपं प्रज्वाल्य पूजां कृतवन्तौ । रात्रौ यदा निद्रा प्राप्ता तदा श्रीरामः स्वप्ने प्रत्यक्षीभूय अवदत् – ''भवतः भक्त्या अहं सन्तुष्टः अस्मि । यत् इष्यते तत् प्रार्थ्यताम्'' इति ।

माधवपण्डितः श्रीरामं भक्त्या प्रणम्य अवदत् – ''एतस्मिन् सप्ताहे ग्रामीणानां पुरतः कमपि महिमानं दर्शयतु कृपया'' इति ।

''अस्तु नाम । यदा भवता जागरणं प्राप्यते तदा भवतः शय्यायाः पार्श्वे एकः सुन्दरः चन्दनदण्डः दृश्यते । तम् आदौ भवान् दक्षिणहस्तेन गृह्णातु । तदा भवता ज्ञायते – कदा किं करणीयम् इति । ततः तं वामहस्तेन गृह्णातु । तदवसरे भवान् यत् वदति तत् सम्पत्स्यते । चन्दनदण्डस्य उपयोगः भवतः दायादैः एव करणीयः, न तु अन्यैः'' इति उक्त्वा रामः अदृश्यतां गतः ।

जागरणानन्तरं माधवपण्डितेन शय्यायाः पार्श्वे चन्दनदण्डः दृष्टः । सः स्वप्नवृत्तान्तं पत्नीम् अपि अवदत् । उभौ अपि समीपस्थे सरोवरे स्नानं कृतवन्तौ । माधवपण्डितः वामहस्तेन दण्डं गृहीत्वा अवदत् – ''एतत् मन्दिरं श्वेतशिलामयं नवीनं च भवतु'' इति ।

अनन्तरक्षणे एव तत् मन्दिरं श्वेतशिलामयं नूतनं च जातम् । एतत् दृष्ट्वा आश्चर्यम् आनन्दं च अनुभवन्तः सर्वे वनवासिनः माधवपण्डितं साष्टाङ्गं नमस्कृतवन्तः ।

एतदवसरे गुणनगरे अपि विविधानि परिवर्तनानि जातानि । नारायणपण्डितेन कथां श्रावयता प्रभूतं धनं प्राप्तम् इति वार्तां श्रुत्वा नर्तक्यः, अन्ये बहवः कलाकाराः चापि तत्र आगताः । अतः नारायणपण्डितस्य कथानां श्रवणे जनानाम् अभिरुचिः न्यूना जाता । आयः अपि क्षीणः जातः । नारायणपण्डितः एतं विषयं गीर्वाणम् अवदत् ।

तदा गीर्वाणः उक्तवान् – ''भवान् माधव-

पण्डितस्य एकमात्रपुत्रः । वार्धके ताभ्यां सह वासः श्रेयसे । अतः भवान् चक्रपुरम् एव गच्छतु'' इति ।

नारायणपण्डितः अवगतवान् यत् इदानीं मद्विषये गीर्वाणस्य सद्भावना न्यूना जाता अस्ति इति । अतः सः पत्न्या सह अनन्तरदिने एव चक्रपुरं गतवान् ।

पुत्रस्य स्नुषायाः च आगमनात् माधवपण्डितः जानकी च नितरां सन्तुष्टौ । माधवपण्डितः पुत्रं चन्दनदण्डप्राप्तिविषयं निवेद्य अवदत् – ''स्वयं भगवान् रामः एव भवन्तम् अत्र आनीतवान् अस्ति । आत्मनि रामभक्तिं पूरयतु भवान् । कालान्तरे अहं भवते मन्दिरस्य कार्यं समर्पयिष्यामि'' इति ।



चन्दनदण्डस्य महिमानं नारायणपण्डितः पत्नीम् अवदत् । एतस्य श्रवणात् लक्ष्म्या मनसि इच्छा उत्पन्ना यत् मम पतिः एव मन्दिरस्य अर्चकः भवेत् इति । सा किञ्चन औषधं जानाति स्म, यच्च सेविनम् अस्वस्थं करोति स्म, पुनः अचिरात् एव तं स्वस्थं करोति स्म अपि । लक्ष्मीः श्वशुराय एतत् औषधं दत्तवती । अतः माधवपण्डितः अस्वस्थः सन् शय्याम् आश्रितवान् ।

वैद्यः माधवपण्डितं परीक्ष्य अवदत् – ''एतत् अस्वास्थ्यम् अपायकारि तु न । एतदर्थम् औषधं किमपि न आवश्यकम् । अपथ्यं न सेवनीयम्'' इति ।

पितुः अस्वास्थ्यस्य कारणतः नारायणपण्डितः मन्दिरस्य अर्चकः जातः । एतं योग्यावसरं मन्यमाना लक्ष्मीः पतिम् अवदत् – ''स्वस्य वाक्शुद्धिं जनेभ्यः प्रदर्श्य तेषां प्रशंसां प्राप्नोतु'' इति ।

अतः तस्मिन् एव दिने नारायणपण्डितः मन्दिरम् आगतान् अवदत् – ''मम वाक्शुद्धिसामर्थ्यम् अस्ति । भवन्तः यद्यत् इच्छन्ति तत् प्रार्थयितुम् अर्हन्ति'' इति ।

जनाः केचन धनम् इष्टवन्तः, पुनः केचन वाणिज्यवृद्धिम् इष्टवन्तः, अन्ये केचन निधिम् अभिलषितवन्तः । यः यः यत् यत् इष्टवान् सः सः तत्तत् प्राप्तवान् । किन्तु लक्ष्मीः पार्श्ववाय्वाघातं प्राप्तवती । तस्य कारणस्य ज्ञानाय नारायणपण्डितः चन्दनदण्डं हस्तेन गृहीतवान् । तदा तस्य शरीरे महान् तापः उत्पन्नः ।

एतस्मिन् एव अवसरे ग्रामजनाः आगत्य अवदन् – ''भवतः पिता अस्माकम् उपकारं कृतवान् । तस्य अस्वास्थ्यं द्रष्टुं वयं न

इच्छामः । यावत् सः स्वस्थः न भविष्यति तावत् ग्रामे वृष्टिः अपि मा भवतु'' इति ।

एतस्य कारणतः ग्रामे वृष्टिः स्थगिता । कासाराः शुष्काः जाताः । एतत् कष्टम् असहमानाः जनाः नारायणपण्डितम् अवदन् यत् एतस्मात् कष्टात् वयं रक्षणीयाः इति । नारायणपण्डितः तान् पितुः समीपं नीत्वा जातस्य अपराधस्य निमित्तं क्षमाम् अयाचत, चन्दनदण्डं पितुः हस्ते अस्थापयत् च । तद्बलेन माधवपण्डितः प्रवृत्तं सर्वम् अवगतवान् । ''पुत्र ! पश्चात्तापः एव श्रेष्ठं प्रायश्चित्तम् । मनसि श्रीरामं दृढतया स्थापयतु । निस्स्वार्थ-भावनया कार्यं करोतु च'' इति उक्त्वा चन्दन-दण्डं पुत्राय प्रतिदत्तवान् सः ।

नारायणपण्डितेन यदा चन्दनदण्डः गृहीतः तदा शरीरे तापः अपगतः । सः जनान् अवदत् - ''यावत् पिता स्वस्थः न भवेत् तावत् ग्रामे वृष्टिः मास्तु इति भवन्तः यत् उक्तवन्तः तस्यैव परिणामः ग्रामे दृश्यते । पितुः अस्वास्थ्यस्य अपगमाय मासात्मकः कालः आवश्यकः भवेत् । तावत् तं वयं ग्रामात् अन्यत्र स्थापयाम । तेन ग्रामे वृष्टिः भवेत्'' इति ।

जनाः एतत् अनुमतवन्तः । ततः नारायण-पण्डितः पितरं मातरं च रामपुरं नीतवान् । पुनः तेन यावत् चक्रपुरं प्राप्तं तावता ग्रामे वृष्टिः जाता । जनाः तं प्रशंसन्तः अवदन् - ''भवतः वाक्शुद्धिः अपूर्वा । अग्रे भवान् एव मन्दिरस्य अर्चकः भवतु'' इति ।

ततः मासाभ्यन्तरे नारायणपण्डितस्य पत्नी लक्ष्मीः अपि स्वस्था जाता । पतिः पत्नी च रामपुरं गतवन्तौ । तावता माधवपण्डितः पूर्णतः स्वस्थः जातः आसीत् । पत्नीसहिततया नारायणपण्डितः पितुः पादौ गृहीत्वा - ''तात ! मया पितृद्रोहः कृतः । अहं देवपूजा-निमित्तम् अर्हः सर्वथा न । अतः भवान् चक्रपुरम् आगत्य देवपूजाभारं स्वयं निर्वहतु'' इति ।

माधवपण्डितः पुत्रं प्रीत्या आलिङ्ग्य - ''भवति वाक्शुद्धिसिद्धिः अस्ति । यावत् स्वार्थभावना भवति न भवति तावत् सा सिद्धिः अपि भवति तिष्ठति एव । इदानीम् एतस्य मन्दिरस्य अर्चकत्वं प्राप्तुम् अर्हः एव अस्ति भवान्'' इति उक्त्वा आशीर्वादेन तम् अनुगृहीतवान् ।





# न्याय्याचरणम्

काशीराज्यं यदा ब्रह्मदत्तः पालयन् आसीत् तदा बोधिसत्त्वः मगधदेशे कस्मिंश्चित् ग्रामे माघनाम्ना क्षत्रियकुटुम्बे जन्म प्राप्तवान् आसीत् । ग्रामे यदि कापि समस्या उद्भवेत् तर्हि तस्याः परिहाराय पञ्चाशतः कुटुम्बस्य प्रमुखाः ग्रामसभायां सम्मिलन्ति स्म । तस्य ग्रामस्य जनाः अशिक्षिताः, युक्तायुक्त-विवेकरहिताः च आसन् । अतः ते चौर्यं, लुण्ठनं, मारणम् इत्यादिकं कुर्वन्ति स्म । ततः ग्रामाधिकारिणे किञ्चित् उत्कोचं दत्त्वा दण्डनात् मुक्तिं प्राप्नुवन्ति स्म ।

यत्र ग्रामसभा प्रचलति तत्र मालिन्य-अवकरादयः बहुधा आसन् । एतत् दृष्टवान् माघः आत्मनः उपवेशनाय किञ्चित् स्थलं स्वच्छं कृतवान् । तदा तत् स्थलम् अन्यः आक्रान्तवान् । माघः अपरत्र भूमिं स्वच्छीकृत्य उपवेशनम् आरब्धवान् । तदपि स्थलम् अन्येन आक्रान्तम् ।

एतस्मात् माघः न खिन्नः । सः ग्रामसभा-स्थानं समग्रं स्वच्छीकृतवान् । तावदेव न, आतपपीडानिवारणाय वितानम् अपि निर्मित-वान् सः । तस्मात् ग्रामस्य सर्वे जनाः सन्तुष्टाः जाताः ।

अल्पे एव काले पञ्चाशतः कुटुम्बानां प्रमुखाः माघस्य व्यवहारेण सन्तुष्टाः जाताः । माघः तेषां नेतृत्वं वहन् ग्रामस्य स्वच्छताम् आरब्धवान् । सर्वे जनाः सम्भूय सभा-समारम्भादिनिमित्तं विशालं मण्डपं निर्मित-वन्तः । उत्तमा पानजलव्यवस्था अपि तत्र कल्पिता ।

एतादृशाः व्यवहाराः माघविषये गौरवम् अवर्धयन् । कालान्तरे ग्रामजनानां व्यवहारे अपि परिष्कारः जातः । ते मार्गाणां निम्नोन्नततां समीकृतवन्तः । मार्गम् आवृत्य स्थिताः वृक्ष-शाखाः कर्तयित्वा शकटस्य सञ्चाराय व्यवस्थां कल्पितवन्तः । गर्ताः मृत्तिकया पूरिताः ।



कासाराः तत्र तत्र निर्मिताः । जनानां सञ्चाराय पादमार्गाः अपि बहुत्र निर्मिताः । एतादृशानां सर्वेषां कार्याणां मार्गदर्शकः आसीत् माघः एव ।

ग्रामस्य तरुणाः यदा चौर्यलुण्ठनादिषु प्रवृत्ताः आसन्, द्यूतसुरापानादिषु आसक्ताः च आसन्, तदा तु ग्रामप्रमुखः विविधैः मार्गैः धनं सम्पादयति स्म । यः उत्कोचं ददाति तस्य दण्डनं निवारयति स्म सः । यः उत्कोचदानं निराकरोति तस्मात् द्विगुणितं धनं वशीकरोति स्म दण्डरूपेण ।

किन्तु माघः यदा तेषां नेतृत्वम् ऊढवान्, तान् सम्मार्गगामिनः यदा कृतवान् तदा तस्य एषः वाममार्गीयः आयः स्थगितः ।

एतत् असहमानः सः कदाचित् राजानं दृष्ट्वा अवदत् – ''महाराज ! अस्माकं ग्रामे अराजकता उत्पन्ना अस्ति । माघनामकस्य कस्यचित् तरुणस्य नेतृत्वे जनाः लवित्र-परशुप्रभृतीन् गृहीत्वा सर्वदा अटन्तः दृश्यन्ते । ग्रामे सर्वत्र तेषाम् एव सञ्चारः । एतस्मात् जनानां प्राणापायः सम्भवेत् । सम्पत्तिरक्षणं न भवेत् । वस्तुस्थितिनिवेदनं मम कर्तव्यम् । तत् मया कृतम् अस्ति । इतःपरं तत्रभवान् प्रमाणम्'' इति ।

'ग्रामस्य स्थितिं परिशील्य, यदि ग्राम-प्रमुखस्य वचने सत्यता दृश्यते तर्हि अत्या-चारिणः बद्ध्वा आनेतव्याः' इति आदिश्य राजा अधिकारिणः सैनिकान् च प्रेषितवान् । सैनिकाः ग्रामं प्राप्तवन्तः । प्रवेशसमये एव दण्ड-परशु-लवित्रादिधारिणः बहवः जनाः

तैः दृष्टाः । सैनिकाः एतद्विषये अधिकं चिन्तनं किमपि अकुर्वन्तः तान् आयुधधारिणः सर्वान् बद्ध्वा राजधानीं नीत्वा राज्ञः पुरतः उपस्थापितवन्तः ।

राजा तेषां हस्तेषु आयुधानि अपश्यत् । तेषाम् उपयोगः कथं क्रियते तैः इति सः न चिन्तितवान् एव ।

ग्रामप्रमुखस्य वचनं सत्यम् एव इति विचिन्त्य सः आज्ञापितवान् – ''एतान् गजानां पादैः विमर्दयन्तु'' इति ।

माघः तदनुयायिनः च अङ्गणे स्थापिताः । पादैः विमर्दनाय भटैः पट्टगजः आनीतः । सः पट्टगजः तान् दूरतः एव दृष्ट्वा तत्रैव अतिष्ठत् ।

ततः भटैः अन्यः गजः आनीतः । सः तु तान् दृष्ट्वा ततः धावनम् एव अकरोत् ।

एषा वार्ता राज्ञा ज्ञाता । राजा अचिन्तयत् यत् एते गजनिवारकं तायकं किमपि धृतवन्तः स्युः, मन्त्रविशेषं वा प्रयुक्तवन्तः स्युः इति । अतः सः भटान् आज्ञापितवान् – ''तेषां सर्वेषां परीक्षा क्रियताम् । यदि कोऽपि तायकं धृतवान् स्यात् तर्हि तत् अपनीयताम् । ततः तेषां मर्दनाय गजः प्रेर्यताम्'' इति ।

भटाः एकैकस्यापि परीक्षणं कृतवन्तः । किन्तु कोऽपि तायकधारी न दृष्टः तैः । एतत् ज्ञातवान् राजा भटान् आज्ञापितवान् – ''तान् विचारणाय मत्समीपं पुनः आनयन्तु'' इति । भटैः तथैव कृतम् ।

राजा तान् अपृच्छत् – ''मर्दनाय आगताः गजाः किमर्थं तूष्णीम् अतिष्ठन् ? किं भवद्भिः कोऽपि मन्त्रजपः कृतः ? किं भवन्तः मन्त्र-



तन्त्रादिषु निपुणाः ?'' इति ।

तदा माघः अग्रे आगत्य अवदत् - ''महाराज ! भवता युक्तम् एव चिन्तितम् । वयं कञ्चित् महामन्त्रं जानीमः । तादृशः मन्त्रः अन्येन केनापि न ज्ञायते'' इति ।

''सः मन्त्रः कः ?'' इति अपृच्छत् राजा ।

''अस्मासु कोऽपि प्राणिहिंसां न करोति । अन्यतः बलात् किमपि वस्तु न स्वीकरोति । दुर्व्यवहारः केनापि न क्रियते । असत्यं न उच्यते । सर्वेषु दया प्रदर्श्यते । जीविषु प्रीतिः प्रदर्श्यते । दानं क्रियते । कासारादायः निर्मीयन्ते । ग्रामाणां स्वच्छता क्रियते । एषः एव अस्माकं मन्त्रः । इतः एव अस्माकं शक्तिः'' इति अवदत् माघः ।

एतत् श्रुत्वा राजा आश्चर्येण पुनः अवदत् - ''मया श्रुतं यत् भवन्तः लुण्ठनं कुर्वन्ति इति । आयुधानि प्रदर्श्य जनेषु भीतिः उत्पाद्यते इत्यपि मया श्रुतम् । किम् एतत् सर्वं मिथ्या ?'' इति ।

''महाराज ! भवता कस्यचित् पिशुनस्य वचने विश्वासः कृतः इति भाति । वस्तुस्थितिः भवता न परिशीलिता एव'' इति अवदत् माघः ।

''भवन्तः आयुधधारिणः आसन् बन्धनसमये । अतः विचारणस्य आवश्यकता नास्ति इति मया चिन्तितम् आसीत्'' इति अवदत् राजा ।

''महाराज ! वयम् आयुधधारिणः इति तु सत्यम् । किन्तु एतानि आयुधानि जनानां हिताय एव, न तु पीडनाय । वयं परशुभिः शाखाः कर्तयामः । लवित्रैः गुल्मादिकं छेदयामः । कासारनिर्माणाय, मार्गाणां समीकरणाय च अपेक्षितानि आयुधानि एव धरामः वयम् । प्रजापीडा स्वप्ने अपि न चिन्त्यते अस्माभिः'' इति अवदत् माघः ।

राजा विचारणात् अवगतवान् यत् माघः सत्यम् एव वदति इति । अतः मिथ्यारोपं कृतवन्तं तं ग्रामाधिकारिणं सः कारागारे स्थापितवान् । उत्कोचस्वीकारादिना अन्याय्यमार्गेण सम्पादितं तदीयम् ऐश्वर्यं तेभ्यः युवकेभ्यः दत्त्वा सः अवदत् - ''इतःपरं ग्रामव्यवहारं भवन्तः एव निर्वहन्तु । अन्यः ग्रामाधिकारी मया तत्र न प्रेष्यते'' इति । ततः तेन पट्टगजः तेभ्यः उपायनरूपेण दत्तः ।





# रामायणम्

ताटकायाः संहारं कृत्वा सुबाहुमारीचौ निगृह्य विश्वामित्रस्य यागस्य निर्विघ्न-परिसमाप्तौ साहाय्यं कृतवन्तौ रामलक्ष्मणौ । तस्यां रात्रौ तौ निश्चिन्ततया शयानौ सुखनिद्रां प्राप्तवन्तौ ।

प्रातः उत्थाय नित्यकर्माणि समाप्य तौ विश्वामित्रसमीपं गतवन्तौ । विश्वामित्रं नमस्कृत्य ताभ्याम् उक्तम् – "मुनिवर्य ! भवतः आज्ञा अनूचानतया पालिता अस्ति आवाभ्याम् । अन्यत् किमपि कर्तव्यं यदि आवाभ्यां निर्वोढव्यं स्यात् तर्हि कृपया आज्ञाप्यताम्" इति ।

तदा मुनयः उक्तवन्तः – "मिथिलायाः परिपालकः राजा जनकः कश्चित् महान्तं यज्ञं कर्तुं सङ्कल्पितवान् अस्ति । वयं सर्वे तत्र गच्छन्तः स्मः । जनकः पूर्वं कदाचित् कमपि यज्ञम् अनुष्ठाय एकम् अपूर्वं धनुः प्राप्तवान् आसीत् । तत् धनुः प्रतिदिनं गन्धपुष्पादिभिः पूजयति सः । तत् धनुः उन्नेतुं न राक्षसाः समर्थाः, न वा देवाः । मानवेषु अपि केनापि तत् उन्नेतुं न शक्तम् । बहवः शक्तिशालिनः राजानः, राजकुमाराः च तत् उन्नेतुं बहुधा प्रयासं कृतवन्तः । किन्तु अद्यावधि केनापि साफल्यं न प्राप्तम् । आश्चर्यं नाम तस्य पुत्री सीता तत् धनुः लीलया उन्नयति । अतः राजा जनकः घोषितवान् अस्ति यत् यः तत् धनुः उन्नीय ज्यां योजयिष्यति तस्मै एव मम पुत्री सीता दास्यते इति । सीतायाः स्वयंवरः इदानीं निश्चितः अस्ति । तस्मिन् च विविधेभ्यः देशेभ्यः आगताः राजानः राजकुमाराः च भागं ग्रहीष्यन्ति । अस्माभिः सह एव यदि भवद्भ्याम् आगम्येत तर्हि जनकस्य सः यज्ञः



द्रष्टुं शक्येत, तत् धनुः अपि द्रष्टुं शक्येत'' इति ।

ततः तेषां यात्रायाः सन्नाहः आरब्धः । विश्वामित्रः वनपालकान् उद्दिश्य - ''अहं मुनिभिः सह इतः प्रस्थाय गङ्गानदीं तीर्त्वा उत्तरस्यां दिशि निर्गत्य हिमालयपर्वतं प्रति गमिष्यामि'' इति उक्त्वा सिद्धाश्रमस्य परिक्रमणं कृतवान्, मुनिभिः रामलक्ष्मणाभ्यां च सह उत्तरस्यां दिशि प्रस्थितवान् च । आदिनं ते चलितवन्तः । सूर्यास्तसमये तैः शोणनदस्य तीरं प्राप्तम् ।

सर्वे नद्यां स्नात्वा सन्ध्यावन्दनादिकं कृतवन्तः । ततः रामलक्ष्मणौ विश्वामित्रस्य पादमुले उपविश्य पृष्टवन्तौ - ''एषः वनावृतः देशः कः ? एतस्य पृष्ठभूमिकायां किं कापि कथा अस्ति ?'' इति ।

तदा विश्वामित्रः तस्य प्रदेशस्य कथां, स्वस्य वंशस्य वृत्तान्तं च श्रावितवान् - ''पूर्वं ब्रह्मणः पुत्रः कुशः नाम कश्चित् तपस्वी आसीत् । सः वैदर्भीनामिकां राजकुमारीं परिणीतवान् । तयोः दम्पत्योः चत्वारः पुत्राः - कुशाम्बः, कुशनाभः, अधूर्तरजाः, वसुः चेति ।

क्षत्रियधर्मस्य निर्वहणाय कुशः समग्रं भूमण्डलं चतुर्धा विभज्य चतुर्भ्यः पुत्रेभ्यः दत्त्वा तान् अवदत् यत् भवन्तः न्याय्येन मार्गेण शासनं कुर्वन्तु इति । ते चत्वारः एकैकं नगरं राजधानीं परिकल्प्य शासनं कृतवन्तः । कुशाम्बस्य राजधानी कौशाम्बी । कुशनाभस्य राजधान्याः नाम महोदयः इति । अधूर्तरजसः राजधान्याः नाम धर्मारण्यम् इति । वसोः राजधानी आसीत् गिरिव्रजः । तेन पालिते देशे स्मः वयम् ।

एतस्य देशस्य चतसृषु दिक्षु पञ्च पर्वताः सन्ति । एषः शोणः तेषु कस्माच्चित् पर्वतात् प्रवहति । एतस्य कारणात् एव एषः प्रदेशः सस्यश्यामलः जातः अस्ति । एषः पूर्वदिशि उत्पन्नः सन् पश्चिमायां दिशि प्रवहति ।

कुशस्य पुत्रेषु कुशनाभः अपि अन्यतमः इति मया उक्तं खलु ? तस्य पत्न्याः नाम घृताची इति । घृताच्यां शतं पुत्र्यः जाताः । ताः सुन्दर्यः आसन् । यदा ताः नृत्यन्त्यः आसन् तदा वायुदेवः तत्र आगतः । ताः दृष्टवतः तस्य मनः तासु लग्नम् अभवत् । सः परिणयेच्छां प्रकटयन् ताः अवदत् - 'यदि भवत्यः मम परिणयम् अङ्गीकुर्युः तर्हि अहं भवतीः सर्वाः वार्धक्यमरणरहिताः कुर्याम्'

इति । किन्तु ताः तस्य परिणयं न अङ्गीकृतवत्यः । ताः अवदन् – 'अस्माकं विवाहं पिता एव निर्वर्तयिष्यति । वरम् अपि सः एव चेष्यति' इति । एतत् श्रुत्वा वायुदेवः कुपितः । सः ताः अशपत् यत् भवतीभिः कुब्जत्वं प्राप्यताम् इति । एतत् श्रुत्वा रुदत्यः ताः पितुः समीपं गतवत्यः ।

पुत्रीणाम् ऐक्यं, वंशाभिमानं च दृष्ट्वा कुशनाभः नितरां सन्तुष्टः जातः । एतासाम् अविवाहितत्वं न शोभते इति अचिन्तयत् सः । अतः सः ताः काम्पिल्यपुरीयाय ब्रह्मदत्ताय दत्त्वा विवाहं निर्वर्तितवान् । ब्रह्मदत्तस्य स्पर्शात् ताः पूर्वतनं सुन्दरं रूपम् एव प्राप्तवत्यः ।

पुत्रीणां विवाहस्य अनन्तरं कुशनाभस्य मनसि इच्छा उत्पन्ना यत् मया पुत्रः कश्चन प्राप्तव्यः इति । अतः सः पुत्रकामेष्टिम् आचरितवान् । तस्मात् तेन पुत्रः कश्चन प्राप्तः । तस्य नाम गाधिः इति । सः धर्मात्मा आसीत् । तस्य गाधेः पुत्रः एव अहम् । मम काचित् भगिनी आसीत् । तस्याः नाम सत्यवती इति । ऋचीकः नाम मुनिः तां परिणीतवान् । सा महापतिव्रता आसीत् । वयं कुशिकवंशीयाः इत्यतः कौशिकशब्देन अपि अस्माकं निर्देशः । मम भगिन्याः कौशिक्याः नाम्ना काचित् पुण्या नदी अपि प्रवहति । भगिनीविषयकेण अभिमानेन अहं कौशिक्याः तीरे एव निवसामि । यज्ञनिमित्तम् एव अहं सिद्धाश्रमं गतवान् आसम् । अस्मासु सम्भाषमाणेषु मध्यरात्रः एव अतीतः । अतः इदानीं भवद्भ्यां शयनं क्रियताम्'' इति ।



यात्राकारणतः रामलक्ष्मणौ अपि श्रान्तौ आस्ताम् । प्रातः उत्थाय स्नात्वा नित्यकर्माणि समाप्य ते शोणम् अतिक्रान्तवन्तः । शोणः न गभीरः । तस्य मध्ये मध्ये सिकताराशिः दृश्यते स्म ।

नदम् अतिक्रम्य ते अग्रे गताः । मध्याह्नसमये ते गङ्गातटं प्राप्तवन्तः । गङ्गां दृष्ट्वा सर्वे आनन्दपुलकिताः । तत्र स्नात्वा ते देवेभ्यः तर्पणं दत्तवन्तः । पितृभ्यः अपि तर्पणं विहितम् । भोजनानन्तरं सर्वे ऋषयः विश्वामित्रं परितः उपविष्टवन्तः । तदा विश्वामित्रः गङ्गायाः कथां श्रावितवान् ।

''हिमवतः उभे पुत्र्यौ गङ्गा उमा चेति । हिमवतः अनुज्ञां प्राप्य देवाः ज्येष्ठां गङ्गां स्वर्गं नीतवन्तः । अनन्तरकाले शिवः उमां परिणीतवान् । गच्छता कालेन सगरस्य पौत्रः



भगीरथः पूर्वजानां सद्गतिप्रापणस्य निमित्तं महता तपसा गङ्गां सन्तोष्य तां स्वर्गतः आनीय पातालं नेतुं प्रयासम् आरब्धवान् । मध्ये बहवः विघ्नाः तेन सम्मुखीकरणीयाः अभवन् । तथापि सः धैर्यच्युतः तु न जातः । प्रयत्नं निरन्तरम् अनुवर्तयन् सः अन्ते तां पातालं नीतवान् एव । तस्मात् सगरपुत्राः सद्गतिं प्राप्तवन्तः ।...''

एवंरूपेण विश्वामित्रः गङ्गावतरणकथां श्रावितवान् । षण्मुखजन्मवृत्तान्तः अपि तेन श्रावितः ।

गङ्गायाः दक्षिणे तटे वसन्तः ते सर्वे तां रात्रिं यापितवन्तः । प्रातः ते उडुपानां साहाय्येन उत्तरतीरं प्राप्तवन्तः । तत्र एकं विशालं नगरं तैः दृष्टम् । तत् दृष्ट्वा रामः विश्वामित्रम् अपृच्छत् - ''मुनिवर्य ! एतत् नगरं कस्य वंशस्य राजा पालयति ? एतत्सम्बद्धा काचित् कथा तु स्यादेव । तस्याः श्रवणे महदस्ति मे कुतूहलम्'' इति ।

एतस्य उत्तररूपेण विश्वामित्रः दानवैः देवैः च सम्भूय कृतं क्षीरसागरमथनं, ततः प्राप्तस्य विषस्य शिवेन सेवनम्, अमृतप्राप्त्यनन्तरं तदर्थं जातस्य देवदानवयोः कलहः, मोहिनीरूपेण विष्णोः आगमनम्, अमृतस्य नयनं, विरोधिनां संहारः, शिष्टानां रक्षणम् इत्यादिकं सर्वं श्रावयित्वा अवदत् -

इन्द्रेण यदा सर्वे पुत्राः मारिताः तदा दितिः पत्युः कश्यपस्य समीपं गत्वा अवदत् यत् इन्द्रसंहारकः पुत्रः मम भवतु इति ।

''यदि भवती सहस्रं वर्षाणि श्रद्धया भक्त्या च तपः कुर्यात् तर्हि त्रिलोकविजयी पुत्रः प्राप्येत । सः इन्द्रम् अपि संहरेत्'' इति दितिम् अवदत् कश्यपः ।

एतस्मात् सन्तुष्टा दितिः कुशप्लवनामकं स्थलं गत्वा तपः आरब्धवती । इन्द्रः तस्याः समीपं तदा तदा आगच्छति स्म । सः भक्त्या तस्याः सेवां करोति स्म । कन्दमूलफलादीनि, क्षीरजलसमिधादयः च तेन आनीय दीयन्ते स्म ।

नवत्यधिकनवशतं वर्षाणि अतीतानि । दितिः गर्भवती जाता । ततः उत्पन्नः इन्द्रस्य संहारे सामर्थ्यं प्राप्तुम् अर्हति स्म ।

कदाचित् मध्याह्नसमये दितिः इन्द्रम् अवदत् - ''वत्स ! भवान् व्यजनेन वीजितवान् । मम पादसेवां बहुधा कृतवान् । भवतः एतया सेवया अहं नितरां सन्तुष्टा अस्मि । जनिष्यमाणं मम पुत्रम् अहं वदिष्यामि यत्

भवता सह मैत्र्या एव व्यवहरणीयम् इति'' इति ।

एतावत् उक्त्वा सा यत्र पादौ स्थापनीयौ तत्र शिरः संस्थाप्य निद्रां कृतवती ।

एतस्मात् तस्याम् अपवित्रता उत्पन्ना । इन्द्रः तु एतादृशम् एव अवकाशं प्रतीक्षमाणः आसीत् । सः झटिति तस्याः गर्भं प्रविष्टवान्, गर्भस्थं शिशुं वज्रायुधेन सप्तधा खण्डितवान् च । एतस्मात् दितेः गर्भतः सप्त पुत्राः उत्पन्नाः । ते देवतासमानाः आसन् । ते मरुतः इति ख्याताः जाताः ।

''राम ! दितिः यदा अत्र तपः कुर्वती आसीत् तदा इन्द्रः तस्याः सेवां कृतवान् । अनन्तरकाले इक्ष्वाकोः पुत्रः विशालः अत्र महानगरं निर्मितवान् । अतः एतस्य नगरस्य नाम विशाला इति जातम् । इदानीं तद्वंशीयः एव सुमतिः नाम कश्चन राजा एतत् नगरं न्याय्येन मार्गेण परिपालयन् अस्ति'' इति विवृतवान् विश्वामित्रः ।

अत्रान्तरे एव राज्ञा सुमतिना ज्ञातं यत् विश्वामित्रादयः बहवः मुनयः आगच्छन्तः सन्ति इति । अतः सः बन्धुमित्रपुरोहितादिभिः सह तेषां स्वागताय उपस्थितः । विश्वामित्रः रामलक्ष्मणौ परिचायितवान् । ते सुमतेः अतिथित्वेन तिष्ठन्तः तां रात्रिं तत्रैव यापितवन्तः । अनन्तरदिने तैः मिथिलां प्रति प्रस्थितम् ।

मिथिलानगरं यावत् आसन्नं तावता कश्चन जीर्णः आश्रमः दृष्टः तैः । सः च आश्रमः सुन्दरः सुस्थितः च एव आसीत्, किन्तु निर्जनः । जनसञ्चारः कोऽपि तत्र न दृश्यते स्म ।

एतत् दृष्ट्वा महत् आश्चर्यम् अनुभवन् रामः विश्वामित्रम् अपृच्छत् - ''अत्र कोऽपि न



दृश्यते एव ! एवं किमर्थम् ?'' इति ।

तदा विश्वामित्रः अवदत् - ''बहोः कालात् पूर्वम् एतस्मिन् आश्रमे गौतमः नाम महामुनिः निवसति स्म । तस्य पत्नी अहल्या । गौतमः तत्पत्नी च घोरे तपसि लीनौ । गौतमस्य तपस्यायाः भङ्गं कर्तुम् इच्छति स्म इन्द्रः । यदि केनचित् कारणेन गौतमे कोपः उत्पाद्येत तर्हि तस्य तपसः भङ्गः कर्तुं शक्येत । तदा एव तदीया शक्तिः क्षीणा भवितुम् अर्हति । अतः इन्द्रः कदाचित् मुनिवेषं धृत्वा गौतमस्य आश्रमम् आगतवान् । वस्तुतः इन्द्रः चन्द्रेण सह मिलित्वा कश्चित् उपायं कृतवान् आसीत् । तदनुगुणं चन्द्रः मध्यरात्रे असमये उदितः सन् सर्वत्र कौमुदीं प्रसारितवान् आसीत् । एतत् दृष्ट्वा प्रभातकालः आसन्नः इति मन्यमानः गौतमः स्नानाय नदीं गतवान् । इन्द्रश्च आश्रमं प्राविशत् ।

आगतम् इन्द्रं पतिं भावयन्ती अहल्या पत्नीवत् व्यवहरन्ती तदीयाम् इच्छां पूरितवती । स्नात्वा नदीतः प्रत्यागच्छन् गौतमः आश्रमतः निर्गच्छन्तम् इन्द्रम् अपश्यत् । तेन प्रवृत्तं सर्वम् अवगतम् । नितरां क्रुद्धः सः इन्द्रम् अशापत् । आश्रमं प्रत्यागत्य सः क्रोधेन अहल्याम् अपि अशपत् । शापकारणतः अहल्या वायुमात्रं सेवमाना अदृश्यरूपेण एव वसन्ती आश्रमे समाधिस्था जाता । गौतमः शापविमुक्तेः मार्गं वदन् अहल्याम् उक्तवान् आसीत् यत् भाविनि काले दशरथपुत्रस्य रामस्य दर्शनात् शापविमुक्तिः इति । अतः वयम् इदानीं तम् आश्रमं गच्छाम । अहल्या सर्वेषां दृष्टिगोचरतां यातु'' इति ।

यदा आश्रमस्य अन्तः गतं तदा सूर्यतेजसा युक्ता मोहनाङ्गी देवतातुल्या सुन्दरी अहल्या दृष्टिगोचरतां गता । रामस्य दर्शनतः सा सर्वैः द्रष्टुं योग्या जाता ।

रामलक्ष्मणौ तां पादस्पर्शपूर्वकं नमस्कृतवन्तौ ।

पत्युः वचनं स्मरन्ती अहल्या रामलक्ष्मणौ अर्घ्यपाद्यादिभिः सत्कृत्य भक्त्या फलानि अर्पितवती । तदवसरे महर्षिः गौतमः अपि तत्र उपस्थितः ।

ततः रामलक्ष्मणाभ्यां सह प्रस्थितवान् विश्वामित्रः मिथिलानगरं प्राप्तवान् ।

- *(अनुवर्तते)*





# अपात्रदानम्

गङ्गारामः दुर्गादासश्च सुहृदौ । तौ उभौ अपि उपाहारमन्दिरस्य स्वामिनौ । सद्गुणसम्पन्नौ तौ मैत्र्याः सारं जानीतः स्म । अतः तयोः विवादः कदापि न जातः । तयोः तादृशीं मैत्रीं दृष्ट्वा ग्रामस्थाः ज्येष्ठाः कलहायमानान् सहोदरान् बोधयन्ति स्म – ''गङ्गाराम-दुर्गादासौ दृष्ट्वा जीवने कथं व्यवहर्तव्यम् इति ज्ञातव्यं भवद्भिः'' इति ।

सङ्क्रान्त्युत्सवे तौ उभावपि वाणिज्यतः आगतं लाभांशं विभज्य स्वीकुरुतः स्म । तस्मिन् अवसरे गङ्गारामः स्वस्य आये सार्धत्रिशतं रूप्यकाणि पृथक्कृत्य स्थापयति स्म । किन्तु दुर्गादासः तं – ''किमर्थम् एतानि ?'' इत्यादिकं न पृच्छति स्म । एतस्मिन् विषये गङ्गारामोऽपि आश्चर्यं प्राप्नोति स्म यत् किमर्थं दुर्गादासः मां किमपि न पृच्छति इति ।

प्रतिवर्षं ग्रामस्य सीमायाम् उत्सवः प्रचलति । तदा तत्र आगताः द्यूते, मदिरायां च आसक्ताः सन्तः सन्तोषेण दिनं यापयन्ति । उत्सवस्थलस्य समीपे किञ्चन शिखरं दृश्यते । शिखरस्य एकस्मिन् भागे कश्चन कूपः अस्ति । कूपं परितः उन्नताः वृक्षाः सन्ति इति कारणात् पथिकानां भोजनाय विश्रान्त्यै च योग्यं स्थलम् आसीत् तत् । प्रतिवर्षं तत्र आगन्ता गङ्गारामः स्वेन पृथक्स्थापितं धनम् एकस्मिन् स्यूते संस्थाप्य कूपस्य समीपे तं स्यूतं त्यक्त्वा गच्छति । तत् धनं केन नीयते इति तेन न परिशील्यते स्म ।

कदाचित् गङ्गारामस्य मनसि जिज्ञासा उत्पन्ना यत् मया स्थाप्यमानं धनं कः स्वीकरोति इति ज्ञातव्यम् इति । अतः एकदा सः कूपस्य समीपे धनस्यूतं निक्षिप्य तत्रैव रहस्यरूपेण कुत्रचित् लीनः । तदा कश्चन स्वशिरसि प्रोञ्छं धृत्वा वृक्षाभ्यन्तरं गतः । तदा गङ्गारामः कूपसमीपे स्वेन स्थापितं स्यूतं द्रष्टुं गतः । किन्तु स्यूतः तत्र नासीत् ।



वृक्षाभ्यन्तरं यः गतः तेनैव स्यूतः स्वीकृतः इति चिन्तयित्वा गङ्गारामः तम् अनुसृतवान् । तस्य समीपं गत्वा सः अपश्यत् । सः आसीत् न अन्यः, अपि तु दुर्गादासः एव ।

तं दृष्ट्वा भ्रान्तः गङ्गारामः – ''मया स्थाप्यमानं धनं कोऽपि दरिद्रः स्वीकरोति, तस्य साहाय्यं भविष्यति इति मया चिन्तितम् आसीत् । किन्तु तद् धनं भवतः हस्ते दृष्टवतः मम महत् दुःखं भवद् अस्ति'' इति उक्तवान् ।

दुर्गादासः मित्रस्य वचनं श्रुत्वा हसन् उक्तवान् – ''मित्र, भवता यदा धनं तत्र स्थापितं तदा एव तत् न भवदीयम् । तत् धनं येन केनापि स्वीकृतं भवेत् चेदपि परिणामे तु न कोऽपि भेदः'' इति ।

''मया किमर्थं तत्र धनं स्थाप्यते इति यदि भवान् जानीयात् तर्हि एतादृशं वाक्यं भवतः मुखात् न निःसरेत्'' इति वदन् गङ्गारामः स्वकथां वक्तुम् आरब्धवान् –

''बाल्ये एव अहं मातापितृविहीनः अभवम् । दरिद्रः अहं स्वस्य उदरं पूरयितुं तादृशे बाल्ये एव अनेकानि कष्टानि अनुभूतवान् । एकदा दुर्भिक्षसमये ग्रामीणाः सर्वे ग्रामं त्यक्त्वा गतवन्तः । तदा एव अहमपि एतं ग्रामम् आगतः । तदा एतस्मिन् ग्रामे महान् उत्सवः प्रचलन् आसीत् । सङ्क्रान्तिदिवसः सः । आ चतुर्भ्यः दिनेभ्यः बुभुक्षया पीडितः अहं भिक्षां याचितवान् । किन्तु तेन किमपि प्रयोजनं न अभवत् । अतः अहं मधुरभक्ष्यापणे कस्मिंश्चित् लड्डुकं चोरितवान् । तदा आपणिकः मां दृष्ट्वा सम्यक् ताडितवान् । असहायकतया, बुभुक्षया, अपमानेन च पीडितः अहं प्राणान् त्यक्तुम् इच्छन् कस्यचित् कूपस्य समीपम् आगतः । तदा कूपस्य समीपे पादे किञ्चन वस्तु संलग्नम् । तत् गृहीत्वा अहम् अपश्यम् । सुवर्णमयम् अङ्गुलीयकम् आसीत् तत् । तत् दृष्टवतः मम जीवने उत्साहः पुनः आगतः । तत् अङ्गुलीयकं विक्रीय अहं महिषीं क्रीतवान् । तदा एव भवतः मैत्री अपि मया लब्धा । उपाहारमन्दिरवाणिज्येन उभाभ्याम् अपि लाभः प्राप्तः । अत एव यत्र मया अङ्गुलीयकं प्राप्तं तत्र गत्वा सङ्क्रान्तिदिने सार्धत्रिशतं रूप्यकाणि रहस्यरूपेण स्थाप्यन्ते'' इति ।

कथां श्रुत्वा दुर्गादासः अवदत् – ''भवतः विचारः उत्तमः स्यात् । किन्तु भवता स्थापितं धनं येन प्राप्येत सः कुपथे गच्छेत् । एतं विषयं प्रत्यक्षतः अवगन्तुं शक्यते'' इति ।

ततः सः गङ्गारामं तस्य कूपस्य समीपं नीतवान् ।

तत्र दुर्गादासः लघुस्यूतमेकं कूपस्य समीपे क्षिप्तवान् । किञ्चित्कालानन्तरं वृद्धः कश्चन साधुः तत्र आगतः । कूपतः जलम् उद्धर्तुं सिद्धः सन् कूपसमीपं गतः सः तत्र पतितं स्यूतं दृष्टवान् । तं धनस्यूतं मत्वा सः सन्तोषेण स्वीकृतवान् ।

अनन्तरक्षणे एव साधोः मनसि विचित्रा अनुभूतिः जाता । स्वेन उच्यमानं देवनाम त्यक्त्वा सः चतसृषु दिक्षु दृष्टिं प्रसारितवान् । ''एतावतां दिनानाम् अनन्तरं मम दरिद्रजीवनं समाप्तम् अभवत् । इतःपरम् अहं विवाहितः सन् सुखेन जीविष्यामि'' इति स्वगतं वदन् जलपानम् अपि विस्मृत्य सः ततः निर्गतवान् ।

गङ्गारामः एतत् सर्वं दृष्ट्वा साश्चर्यम् उक्तवान् - ''सर्वसङ्गपरित्यागी साधुः अपि अस्मिन् वयसि विवाहम् इच्छति किल'' इति ।

'मौनेन स्थातव्यम्' इति हस्तसङ्केतेन दुर्गादासः गङ्गारामं सूचितवान् । ततः सः एकं रजतनाणकं कोशात् निष्कास्य कूपसमीपे क्षिप्तवान् ।

तदा परस्परं कलहायमानौ कौचन द्यूतकारौ तेन मार्गेण आगतौ ।

तयोः एकः अपरम् उद्दिश्य -''महिषी-क्रयणार्थं मया आनीतं धनं भवान् द्यूते मत्तः व्ययीकारितवान् । एकं रूप्यकम् अपि न अवशिष्टं मत्समीपे इदानीम् । कथं गृहं गच्छानि ? तत्र जायमानं अपमानं विचिन्त्य अहं भावयामि यत् प्राणत्याग एव वरम् इति'' इति वदन् कूपसमीपम् आगतः । अपरः तं निवारयितुम् इच्छन् पृष्ठतः धावितवान् । तावति काले पूर्वं गतेन रजतनाणकं लब्धम् । तत् नाणकं हस्ते स्वीकृत्य - ''उचिते समये मया धनं प्राप्तम् । प्रायः अनेन धनेन नष्टं



सर्वं धनं पुनः प्राप्तुं शक्नुयाम्'' इति वदन् सः पुनः द्यूतगृहं प्रति धावितवान् ।

''ममापि तस्मिन् धने भागः अस्ति'' इति उच्चैः वदन् अपरः अपि तस्य पृष्ठतः धावितवान् । एतत् दृष्ट्वा गङ्गारामः दुर्गादासम् उक्तवान् – ''मित्र ! अस्य व्यवहारं पश्यतु । एतेन द्यूते सर्वस्वम् अपि नाशितम् । तथापि इदानीं यत् एकं रूप्यकं लब्धं तदपि द्यूते नाशयितुं प्रवृत्तः दृश्यते एषः । किमेतत् ?'' इति । दुर्गादासः किमपि नोक्तवान् ।

कश्चन कालः अतीतः । तदा काष्ठविक्रयिकः कश्चन काष्ठानि शिरसि वहन् कूपसमीपम् आगतः । दुर्गादासः किञ्चिद्धनयुक्तं स्यूतमेकं तस्य काष्ठविक्रयिकस्य मार्गे क्षिप्तवान् ।

काष्ठविक्रयिकः – ''अहम् एतेषां काष्ठानां विक्रयणं कदा कुर्याम् ? कदा वा गृहं प्राप्नुयाम् ?'' इति स्वगतं वदन् कूपतः जलम् उद्धृत्य पूर्णोदरं जलं पीत्वा ततः वेगेन विपणिं प्रति गतः एव ।

''अहो । किमेतत् ! मार्गे पतितं स्यूतं कटाक्षेणापि अपश्यन् सः पुरुषः गतः एव'' इति गङ्गारामः आश्चर्येण उक्तवान् ।

''दृष्टं किल – भवता स्थापितेन धनेन कीदृशी हानिः जायते इति । अनायासेन धनं प्राप्यते चेत् जनैः तस्य धनस्य महत्त्वं न ज्ञायते । वृद्धस्य साधोः मनः अपि धनदर्शनेन परिवृत्तम् अभवत् । तेन साधुना तस्मिन् स्यूते धनम् अस्ति उत अन्यत् किमपि इत्यपि न दृष्टम् । तथैव रूप्यकं दृष्टवान् द्यूतकारोऽपि अनायासेन प्राप्तं धनं पुनः द्यूते एव विनियोक्तुं गतः । ये स्वश्रमेण प्राप्तेन धनेन सुखम् अनुभवन्ति ते अनायासेन प्राप्यमाणे धने निरासक्ताः एव भवन्ति । अतः एव काष्ठविक्रयिकः स्वस्य श्रमस्य फले एव लग्नः सन् पुरतः पतितं धनं कटाक्षेण अपि न दृष्टवान्'' इति दुर्गादासः उक्तवान् ।

''तर्हि एतावत्पर्यन्तं मया कृतं दानं सर्वं जले क्षिप्तमिव व्यर्थम् अभवत् किम् ?'' इति पृष्टवान् गङ्गारामः ।

तदा दुर्गादासः – ''नास्ति । तद् धनं मया सुरक्षितं स्थापितम् । तेन धनेन आवाम् उभावपि एकां पाठशालां निर्माय जनोपकारकं कार्यं करवाव'' इति उक्तवान् ।



31

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

शान्तिपुरे नूतनस्य राज्ञः स्वागताय सन्नाहः प्रचलति । सुखदेवः वीरसिंहस्य मरणवार्ता श्रावयित्वा सैनिकान् वदति यत् विरोधं कृतवन्तः दण्ड्यन्ते इति । शान्तिपुरं प्रति प्रस्थानाय आर्यः सन्नद्धः भवति । जयानन्दस्य आशीर्वादं प्राप्य, मातापित्रोः स्मारकं सश्रद्धं नमस्कृत्य सः शिबिकाम् अरोहति । अन्यया शिबिकया सुकन्या अपि प्रतिष्ठते तेन सह ।

चित्रम् - गान्धि-अय्यः

राजभवनस्य प्राङ्गणे ...

मानवेन्द्रः आगच्छन् अस्ति ।

राज्ञः शान्तिदेवस्य मन्त्री !

सुखदेव ! बहूनां वर्षाणाम् अनन्तरम् आवयोः मेलनं जायमानम् अस्ति ।

महानुभाव ! एषः जयानन्दमुनिः ।

गुरुवर्य ! भवता अस्मभ्यं योग्यः राजा प्रदत्तः ।

राज्याभिषेकः यावत् न सम्पद्यते तावत् आर्यः राजकुमारपदवाच्यः भवति ।

सुखदेवः अङ्गरक्षकान् कानिचन कार्याणि सूचयति ।

गत्वा शिबिके सुरक्षिततया आनीयेताम् ।

उभे शिबिके प्राङ्गणं प्रति आनीते ।


आदौ आर्यः शिबिकातः बहिः आगच्छति ।
राजकुमार ! आर्य ! राजधानीं प्रति भवतः स्वागतम् ।
अहं निश्चयेन अभिभूतः अस्मि ।


सुखदेवः आदौ आर्यं प्रीत्या आलिङ्गति ।
आर्य ! तत्रभवान् मानवेन्द्रः भवन्तं प्रतीक्षते ।


महानुभाव ! अत्र उपस्थितः भवन् भवान् मां धन्यं कृतवान् ।
बहूनां वर्षाणाम् अनन्तरं योग्यं राजानं प्राप्नुवत् शान्तिपुरं निश्चयेनास्ति भाग्यशालि !


आर्यः जयानन्दसमीपं गच्छति ।
मम पितामहः क्व ?
सः अचिरात् एव अत्र भविष्यति ।


कश्चन रथः वेगेन राजभवनस्य दिशि आगच्छन् दृश्यते ।
तत्र दृश्यताम् । राजा प्रेमनाथवर्यः उपस्थितः ।
मार्गरक्षकत्वेन तेन सह तिष्ठति वसन्तः ।


वसन्तः अश्वात् अवतीर्य रथस्य अग्रे गमनाय मार्गं कल्पयति ।


मानवेन्द्रः आर्यं प्रेमनाथसमीपं नयति ।
आर्य ! भवता मेलनीयम् इति इच्छा बहोः कालतः आसीत् मम ।
मम पौत्रः कुत्र अस्ति ?


आर्यः राजानं विनयेन प्रणमति ।
जनसमूहतः जयघोषः श्रूयते बहुधा ।
पितामह ! भवान् द्रष्टव्यः इति मम मनसि अपि प्रबला इच्छा आसीत् ।
इदानीं वयम् आस्थानभवनं प्रति गच्छाम ।


सुखदेवेन सह स्थिता सुकन्या प्रसन्नमनस्का दृश्यते ।
पितः ! किं राजकुमारस्य पट्टाभिषेकः अद्यैव प्रचलेत् ?
स तु भविष्यति उत्तमे मुहूर्ते वत्से !


अमृतपुरस्य राजा मानवेन्द्रः च आस्थानं प्रविशतः ।
शुभेऽवसरे शान्तिदेवः नास्ति इति तु विषादस्य विषयः ।
तस्य चिरवियोगः सर्वेषाम् अपि खेदाय एव ।


आर्यः वसन्तश्चापि प्रविशतः ।
एतस्मिन् स्थाने अरण्ये वर्धितवतः जनस्य स्थितिः न शोभते ।
इतःपरं भवता महत् उत्तरदायित्वं निर्वोढव्यम् अस्ति आर्य !


मानवेन्द्रः राजानं प्रेमनाथं सिंहासनदिशि नयति । जयानन्दः च आर्यम् अपरस्य सिंहासनस्य समीपं नयति ।

राजपदे स्थितं प्रेमनाथं, राजत्वं प्राप्तुं सन्नद्धं राजकुमारं च दृष्ट्वा जनसमूहः आनन्देन जयघोषं करोति ।

राजकुमारः आर्यः जयतात्

महाराजः प्रेमनाथः जयतात् !

मया राजकुमारस्य तायकम् आनीतम् अस्ति ।

सुखदेव ! भवता अविस्मृत्य आनीतम् एतत् !

जयानन्दः राजकुमाराय तायकं दर्शयति ।

आर्य ! यदा भवान् शिशुः आसीत् तदा भवदीया माता भवन्तं मदधीनं कृतवती आसीत् । भवन्तं कोऽपि न अभिजानीयात् इति उद्देशेन मया तायकम् अपनीतम् आसीत् ।

एतद्विषये अहं न जानामि स्म एव !

महाराज ! राजकुमारः एतत् धरतु नाम ।

अद्य अहं नितरां सन्तुष्टः अस्मि ।

राजा प्रेमनाथः राजकुमारस्य हस्ते तत् तायकं बध्नाति ।

भवान् सूर्यवंशीयः । योग्येन क्रमेण राज्यं पालनीयम् इति भवता सदा स्मर्तव्यम् ।

महाराज ! मम पिता प्रजासु कथं प्रीतिमान् आसीत्, प्रजाश्च तस्मिन् कथम् आदरवन्तः आसन् इति मया ज्ञायते ।

आर्यः जनसमूहम् उद्दिश्य वदति ।

मम इच्छा अस्ति यत् शान्तिपुरे प्रजानाम् एव शासनं स्यात् इति । मम गुरुः प्रीत्या येन आर्यशब्देन मां सम्बोधयति तेनैव पदेन अहं निर्देष्टव्यः भवद्भिः ।

जनसमूहः प्रतिवाक्यं साधुवचनं वदति ।


भवान् प्रत्यागतः इति तु शान्तिपुरस्य सौभाग्यम् ।
यावत् प्रजाः माम् इच्छन्ति तावत् अहं तासां सेवां करिष्यामि ।


वसन्तः राज्यस्य रक्षणभारं निर्वक्ष्यति ।
राजकुमार ! महान् एव उत्तरदायित्वभारः मयि आरोपितः ।


वत्स ! अमृतपुरस्य विषये अपि भवता अवधातव्यम् अस्ति । भवान् एव मम उत्तराधिकारी ।
अहं तत् दिनं प्रतीक्षिष्ये, यस्मिन् च दिने शान्तिपुरम् अमृतपुरे अन्तर्भूतं भवेत् ।


शान्तिपुरे जयपुरस्य अन्तर्भावः अपि कुतः न चिन्त्येत ? किं मम पुत्र्याः पाणिग्रहणं भवतः सम्मतम् ?
यदि गुरुवर्यस्य अनुज्ञा स्यात् तर्हि एव ...


अत्र अहमपि सहमतः अस्मि आर्य ! सुकन्या भवतः जीवने सहगामिनी भवतु इति अहमपि इच्छामि ।
भवतः आज्ञा सर्वदा शिरोधार्या मम ।
गुरुवर्य ! भवतः अनुज्ञा यदि स्यात् तर्हि वयं भगवत्याः पूजां कुर्याम मन्दिरं गत्वा ।


आर्यः सुकन्या च कनकदुर्गामन्दिरं प्रति गच्छतः । आनन्दसागरे निमग्नाः जनाः उत्साहेन तौ अनुसरन्ति ।
समाप्ता

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थकं विज्ञानम्




### असत्यस्य अभिज्ञातारः

एषु दिनेषु अपराधप्रवृत्तिः वर्धमाना अस्ति । अतः असत्याभिज्ञानयन्त्रस्य महत्त्वम् अपि वर्धते । केचन पुरुषाः अपि तादृशस्य यन्त्रस्य पात्रं निर्वोढुं शक्नुवन्ति इत्यत्र किं भवन्तः विश्वसन्ति ? नाडीसम्बद्धया समस्यया पीड्यमानाः केचन वस्तुत असत्याभिज्ञाने समर्थाः, यन्त्राणि इव । तादृशानां रोगः निर्दिश्यते 'अफासिया' इति । मस्तिष्कहानेः कारणतः सा स्थितिः प्राप्यते तैः ।

नडीशास्त्रतज्ज्ञाः वैद्याः बहून् प्रयोगान् कृत्वा प्रमाणीकृतवन्तः सन्ति यत् अफासियारोगग्रस्ताः असत्याभिज्ञाने विशेषसामर्थ्यवन्तः भवन्ति इति । मेसेचुसेट्विश्वविद्यालयीयः डा. आलिवर्सास्वर्यः एतस्मिन् क्षेत्रे विशेषाध्ययनं विहितवान् अस्ति । सः स्वीये पुस्तके एकां घटनाम् उल्लिखति । कदाचित् अफासियारोगिणः दुरदर्शनं पश्यन्तः आसन् । दुरदर्शनेन राष्ट्राध्यक्षाभ्यर्थिनः भाषणं प्रसार्यते स्म । तेन भाषणकर्त्रा विविधानि आश्वासनानि प्रदत्तानि । तथापि सः दुरदर्शनद्रष्टृणाम् अफासियारोगिणां मनस्सु विश्वासम् उत्पादयितुं न शक्तः । अतः तस्य भाषणस्य समाप्तेः अनन्तरं ते श्रोतारः अफासियारोगिणः सर्वे उच्चैः हसितवन्तः ।

## भवतां परिसरः

### मज्जातः नगरस्य संरक्षणाय



वेनिस्नगरं पो-पैव्नामिकाभ्यां नदीभ्यां निर्मितेषु १२० द्वीपेषु प्रसृतम् अस्ति । एतयोः नद्योः धाराः नगरे सर्वत्र प्रवहन्त्यः बहून् जलावृतान् प्रदेशान् निर्मितवत्यः सन्ति ।

जागतिकस्तरे जायमानस्य वातावरणपरिवर्तनस्य कारणतः तस्मिन् नगरे प्रवाहपीडा अत्यधिका । तज्ज्ञाः अभिप्रयन्ति यत् अग्रिमेषु ५० वर्षेषु नगरस्यास्य ८% भागः जलमग्नः भवेत् इति । एतत् निवारयितुं विविधाः योजनाः अनुस्रियमाणाः सन्ति । येन मार्गेण समुद्रजलं नगरं प्रविशति तत्र सर्वत्र द्वाराणि निर्मितानि सन्ति । समुद्रे जलस्तरः यदा न्यूनः भवति तदा तानि द्वाराणि उद्घाटितानि भवन्ति । यदा च जलस्तरः अधिकः तदा तानि पिहितानि भवन्ति । वस्तुस्थितिः नाम वर्षस्य बहुषु दिनेषु तानि द्वाराणि पिहितानि एव तिष्ठन्ति !

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?



### दन्तकूर्चस्य जन्म

समग्रे जगति नागरिकाणां सर्वेषां दिनचरी भवति यत् प्रातः उत्थाय आदौ दन्तधावनं करणीयम् इति । एतस्याः क्रियायाः निर्वर्तनाय सर्वैः उपयुज्यमानं साधनं नाम – दन्तकूर्चः ।

एषः दन्तकूर्चः स्वस्य अन्वेषकस्य कृषिकस्य भविष्यम् एव पर्यवर्तयत् इति किं भवन्तः जानन्ति ? इंग्लेण्ड्-देशीयः विलियम् अड्डिस् १७७० तमे वर्षे दन्तकूर्चस्य अन्वेषणम् अकरोत् । सः भोजने विसृष्टानाम् अस्थ्नां, सम्मार्जनीशलाकानां च उपयोगेन ऐदम्प्राथम्येन दन्तकूर्चं निर्मितवान् । सः अस्थिदण्डे रन्ध्राणि कृत्वा सम्मार्जनशलाकाः योजितवान् । प्रयोगोऽयं यशस्वी जातः । ततः तेन महता प्रमाणेन दन्तकूर्चनिर्माणम् आरब्धम् ।

## अभिवर्ध्यतां ज्ञानशक्तिः

**एतस्मिन् मासे हिन्दुत्वसम्बद्धाः भवन्ति प्रश्नाः । यथायोग्यम् उत्तरं ज्ञातुं प्रयत्यताम् ।**





१. आदिशङ्कराचार्येण अद्वैतसिद्धान्तः प्रतिपादितः । विशिष्टाद्वैतपरम्परा रामानुजाचार्येण उज्जीविता । मध्वाचार्येण प्रसारितः सिद्धान्तः कः ?

२. आदिशङ्कराचार्येण ओरिस्साराज्ये पुर्याम् संस्थापितस्य मठस्य नाम किम् ?

३. दक्षिणभारते वैष्णवपरम्परां के विस्तारितवन्तः ?



४. महाभारते अतिदीर्घं पर्व किम् ?

५. विष्णुसम्बद्धानि षट् पुराणानि कानि ?

(उत्तराणि ६६ तमे पृष्ठे)



# चित्रशीर्षिकास्पर्धा



TATA NARAYANAMURTHY

अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



ANANTHA PRABHAKAR DUTT

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जनवरी'मासस्य शीर्षिकाप्रेषिका -

**श्रीमती श्रद्धा उभयङ्कर**

ए.३, साई काम्प्लेक्स्, चिकालीम्

**गोवा - ४०३ ७११**

## पुरस्कृता शीर्षिका





**ग्रामीणवेषधारी बालकः**
**धृतनगरवेषा बालिका**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. द्वैतसिद्धान्तः ।

२. गोवर्धनमठः ।

३. आल्वारपदवाच्याः द्वादश विष्णुभक्ताः ।

४. द्वादशं पर्व ।

५. विष्णुपुराणं, भागवतपुराणं, गरुडपुराणं, नारदपुराणं, पद्मपुराणं, वराहपुराणं च ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# A TREASURE-TROVE FOR TALENTED TOTS





Junior
CHANDAMAMA

## THE ONE-STOP COMPLETE FUN AND ACTIVITY MAGAZINE

NOW AVAILABLE AT YOUR NEAREST NEWS STAND FOR RS.15 PER COPY



- Games, puzzles, riddles, stories, colouring activity and more...

- Good habits grow when young. Check out articles and features in which values are taught subtly and let your child learn about Indian culture and heritage.












- Pick up a copy of Junior Chandamama for interesting new stories and puzzles to be read out to the kiddies.

**PAY ONLY RS.150 FOR ANNUAL SUBSCRIPTION AND SAVE RS.30**

CHANDAMAMA (Sanskrit) MARCH 2006
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post WPP Inland No TN/CC(S)Dn/62/06-08, Foreign No 83/06-08